(ततः प्रविशति सखीभ्यां जाम्बवती)

**जाम्बवती**- हला ! अवइआओ रसालकलिआओ । एदं सितवणी आसो अम्मि सज्झारा अललिआई किंस्विह विल- सत्ति । ताओच्चिणुमदाइ ।

**सख्यौ** - तह इति (तथा कुरुतः)

**जाम्ब** - (साभ्यसूयम्) हला चन्दलेहे ! किमह हथ्थणहग्गेण दूमेसि ।

**चन्द्रः** - (सस्मिताभ्यर्थनम्) हला ! मरिएसे किदाविअ म्मए; असोअ किसलसद्देहेण ।

**देवः** -

ललिततया मृदुलतया रागातिशयेन नैव भेदकथा ।
नखरुचिरेव विभेत्री हस्ताशोकप्रवालयोरस्याः ॥ ४५ ॥

**चन्द्रः**--कुमुइणीओ दस्सि हिदाव तुह हंथगअं किसलअं भट्टि- दारिआए अणुहोदु सज्झरा राअसग्गी मुहअद्दो ।

**कुमु** :– तहा (इत्यवतंसयति)

**देव** :–

अशोकपल्लवव्याजादस्या वदनपङ्कजे ।
जेतुं जगन्मनोजेन निक्षिप्तो रागसञ्चयः ॥ ४६ ॥

**कुमु** :– हला ! पेक्खेहि –

रहइ एदा एव्ववरं वदस्सि दासोअपल्लवं वअणम् ।
कमलवअसि विसट्ठ [illegible] ॥ ४७ ॥

**देव**: - (सविचिकित्सम्)

कमलभवगर्वमुद्रा कामाहङ्कार[1]कार्मणावयवा ।
का वा कृशोदरीयं करणानन्दाब्धिकौमुदीलहरी ॥४८॥

( सनिश्चयमिव ) कस्यचित्परिवृढस्यापत्यमित्यवगम्यत एवावधीरितसुधावलेपैः परस्परालापैः । भवतु; क्रमाद्-ज्ञास्यामि ।

**विदू** :- (सस्मितम्) किण णणाणेण तुह ।

**जाम्ब**:- हला ! एथ्थ पुल्लमराव णोमालिआ दीसइ । उपसप्पेमणी ।

( तथा कुर्वन्ति )

**चन्द्र**: - (साकूतम्) हला ! पेख्ख रसालसवंती । संगमयामि एव्वरो सराओ पअडच्छलपुलइआमआओ मिसासिज्जइ णोमालिणा । सण्णिहिदभट्टिदारिअं दठ्ठूणलआसंक आरि पल्लच्छलेण रोसरा अप्प अडेइ । अहवसवत्ती सम्भम्मिएव्व रोसराओ पअहणिज्जोत्ति भट्टिदारि-अस्सिंखावेइ ।

**जाम्ब**:-(सभ्रुकुटि[2]बन्धम्) अह णसव्वद्धप्पलविणि अवेहि ।

**कुमु** :- हला ! जइ तादो तुमं बहुवल्लहस्स पडिवादोइ तदा [3]जुत्तणिवं ।

---



1. कर्मणा-A.B. कर्मगा-C. 2. भङ्गम्-B. 3. जुत्तणिव्वज्ज-B. जुत्तणिः-A.

चन्द्रः--अइअ उणाहिंणुए ।

अण्णा सागस्सकहं लद्धूण इमं कुणेइ किलसाहो ।
लहिउज्जा इलइ अल्लअत्तरी महइ किं भमरो ॥ ४९ ॥

देवः - सत्यं त्वमीदृशवचनसुधास्यन्दिनी चन्द्रलेखैव ।

विदूः - वअस्स ! अण्णारिसक्खु इमीए रूवहेवे ।

देवः - किमुच्यते ? अस्याः खलु-

वक्त्रं चेद्विपदेव शीतमहसो राकासमाश्लेषणं
दृष्टिश्चेत्सरसीरुहस्य सुमहानाधि[1]र्विभातागमः ।
वक्षोजौ यदि कोकयोरविरतं [2]शोकावहो वासरः
पादौ चेन्नवपल्लवस्य मरणं प्रायो वसन्तोदयः ॥ ५० ॥

जाम्बः- हला ! ओच्चिचणिआइ मए परिमलततिल्ल हमिरभसल चलणसच्चरण दंतुरिआदलविसमाइ णोमालिआकुसुमाइ । ता मसिणपवणसच्चालिअमंजरीरअपंथणसिअ इलत्तरअपंथणासिअ इलत्तर पहिलसिलाअलस्स माहवमण्डवस्स अगणम्मि कबरीवीर एसो ।

उभेः- जह रइअस्सहीण । (इति सर्वाः परिक्रामन्ति)

देवः- वयस्य ! कथमिवाऽस्या अन्ववायज्ञानोपायः ?

विदूः-किं एव्वं विआरेण ? जंतुमं महीएभट्टा । ता अंब्रह्मकेरं



1. विभागागमः-A. 2. शोकोपहो-A.

उज्जाणम्मि सच्चारह । का तुह्येत्ति तज्जण पुरव्वं पुच्छिदे सव्वं पुडं होस्सिदि ।

**देव**: - हन्त ! सुकुमारोऽयमुपायोपन्यासः । तदस्माभिः प्रथममेव माधवीमण्डपाभ्याशे स्थातव्यम् । इयञ्च उज्ज्वलाकारविशेषानुमिताभिजात्याऽस्माननादृत्य न यास्यत्येव । क्रमेण सकलमपि [1] ज्ञास्यामः ।

( इति तथा कुरुतः )

**चन्द्र**:- (पुरः परिक्रामन्ती देवमालोक्य ससम्भ्रममात्मगतम्) अहो को एस णवजलहरसामलसिणि अकंती पुण्डरीअलोअणो अलंकरिअ मिअ आवेसो डुभगचूडामणिं इदं उज्जाणं अलंकरेइ । (निर्वर्ण्य [2]साशंसम्) सोंदेरसो अमल जोव्वणेहिं भट्टिदारिआए सरिसो एसवरो । अहवअं पविठ पुरवंमाणुसेहिं एदं उज्जाणम् । इमं सुहअं आणत्त सविहिणो कोववसा ओंति कोमुणेंज । (प्रकाशम्) हला ! भट्टिदारिए ! किं पडिल अलग्गसि ।

**जाम्ब**:-हला ! चन्दलेहे ! अम्हे विपरिच्चइ अदिठमहाणि हाणे [3] व्वयासि ।

**चन्द्र**:- सच्चं दीसइ गोदेरसो अमल्लणीहि ।

**जाम्ब**:-(देवं विलोक्य, सानन्दकम्पं मुखमवनमय्य, आत्मगतम्) अवेमा को



1. ज्ञास्यावः-B. 2. साश्वासम्-A. 3. व्वधासि-A.

इमो सुहा। (सलज्जाशङ्कम्) हद्धि किं एदस्स दंसणेण ज किंवि अण्णं मणिविआरेइ मे हिअअं। (प्रकाशम् सगद्गदम्) हला! कुमुइणि! जुत्तंखु इमस्स समीवोवसप्पणं।

कुमु: - हला! आआरेण च्चिअणज्जत्त महाणुभावस्सो महुरगंभीरस्सभावो विअ एसो।

चन्द्र:- भट्टिदारिए! पेक्ख इमं कहं वा आमत्तेण विअ संभावणिज्जो।

जाम्ब:-अण्णारिसं इमि वअणम्।

कुमु :-(सस्मरणम्) हला! जुत्तं खु इमस्स समीवोपसप्पणम्। [1]जिह्मरि आसिता दस्सणा अस्स सासणं। कइआविअ अदिहितिरक्कारो ण करणिज्जोत्ति।

चन्द्र:- हला! भट्टिदारिए! तुह सरिसो खु एसो।

जाम्ब:- (सभ्रुकुटिभङ्गम्) को वा?

चन्द्र: - एसाण पुरिसविसेसाण सक्कारो।

जाम्ब:- तुह्मेच्चिअइदं जाणभ। (इति सलज्जमुपसर्पति)

देव: - (सानन्दातिशयम्) हन्त! फलितं जन्म चक्षुषोः। यदियम्-

---



1. जिह्मरि-B. कुआसिता-A.

मदगजगतिलीलां मानयन्ती पदाभ्यां
शबलितहरिदन्ता चञ्चलैर्दृष्टिपातैः ।
सपदि सहजलज्जा सङ्कुचद्गात्रवल्ली
मदनजयपताका मन्दमन्दं समेति ॥ ५१ ॥

**जाम्ब**:- (सभयमात्मगतम्) किं णेदं अस्सणेण अत्तणो हिअअं सविण पहुप्पामि । (इति मदनकातर्यं नाटयन्ती परिक्रामति)

**विदू**:- वअस्स ! सव्वाओ संणिहिआओ ।

(सर्वा उपसर्पन्ति)

**सख्यौ**:- सागअं अदिहिविसेसस्स । एसा अज्जली ।

**देव**: - इदानीमत्रभवतीनामशेषश्रेयोनिदर्शनेन दर्शनेन ।

**चन्द्रः** - (विवृत्य सस्मितम्) भट्टिदारिए ! परामसु महाभाअं ।

**जम्ब** :- (ससाध्वसमात्मगतम्) महसज्झसस्स परवसस्ससरीर । तहवि काअंवि करणिज्जं । (सपीडमञ्जलिं बध्नाति)

**देव**: - (आत्मगतम्) हन्त ! जातं नयनसाफल्यम् । यतः–

आलक्ष्यचारु[1]कुचकुड्मलसन्निवेश-
मारोपितो निटिलमञ्जलिरायतक्ष्या ।
लावण्यशालिवदनद्युतिवारिपूर-
[2]सञ्जायमानसरसीरुहकोरकश्रीः ॥ ५२ ॥

---



1. कुंकुमसन्निवेश-B. 2. सन्ध्याय-B.C.

कुभु :- (सप्रश्रयम् ) अंअ ! एदस्स माहवीमण्डवस्स परिमज्जिअ सिसिरम्मिदेरदेसम्मि ओवसिअ परिस्समो ओणेदव्वो ।

देव :- यूयमपि वनविहारेण परिश्रन्ताः ।

चन्द्र :- ( सस्मितम् ) भट्टिदारिए ! एहि [1]उववसिह्म । ( इति सर्वे यथोचितमुपविशन्ति)

जाम्बः- (आत्मगतम्) अह्मो ! केरिसं इमंस महुरत्तण । जं एक्क-सिक्कणे मंविअं उज्झिअ दृढं एदस्सिं लग्गं हिअअं । णअणा विमेवसाणहोत्ति । लज्जाविपरम्मुही विअदीसइ । को इमो पुच्छेहत्ति पिअसहिओ विपणिदुं हिरिआमि ।

(इति चन्द्रलेखान्तरिता देवमपांगयति)

देव :- (सोल्लाससंवरणमात्मगतम्) आः ! कोऽयमकाण्ड एव करुणा मयि भगवतः पञ्चबाणस्य । यदियम् –

शाणावलीढकुसुमायुधशस्त्रधारा-
दूरातिपातिदुरहङ्कृतिहारिलीलैः ।
बाला तनोति परितोषमयं मनो मे
जालावपातिशफरीचटुलैः कटाक्षैः ।। ५३ ।।

चन्द्र :- (उभाववलोक्य आत्मगतम्) परोप्परवच्चइअ हिअअं एदाणिं । तह हिअण्णं णभावदस्सण [1]बलक्खणमत्तमुहच्छुहा इर-णा । अवहे विहद्दि एदे पेच्छद्दित्ति तिरि[2]च्छिदिव्वो एत्ति ।

---



1. वेलक्खण-A. 2. छिद्रठिवा-A.

**देव** :- (आत्मगतम्) अथवा स्वाभाविकमेव यौवनोदये दृष्टिचातुर्यं चञ्चलदृशाम् ।

**चन्द्र** :- (स्मयमाना जनान्तिकम्) हला! भट्टिदारिए किं पुच्छामि इमं सुहअचूडामणिं ।

**जाम्ब**:- (सकोपमिव जनान्तिकम्) किंति ?

**चन्द्र** :- (जनान्तिकम्) कोतु भववएसो कोत्तो किण्णामहे अत्ति ।

**जाम्ब**:- किमं पुच्छामि जह तह रुच्चइ तह कूणसु ।

**चन्द्र** :- (देवमवलोक्य प्रकाशम्) महाभाअ ! तुह्माण आआराणुमिदं मुहुरसहाअंतणं ममत्तेदि । अस्स जीमणेण चट्टस्सव सुज्जस्स वागार विवमि ओवस्सो कोवा अस्सण अत्तरिदण अणस उल्लासो देसो विहिओ । केणव व[1]असेण [2]फलिओ अह्माणमणरहो ।

**जाम्ब**:- (शृङ्गारलज्जां नाटयति)

**देव** :- (आत्मगतम्) किं गोपनेन ? (साकूतं विदूपकमवलोकते)

**विदू** :- होदि णिसामेहि । चंदवंसमणिहोम महाराअवसुदेवस्स णंदणो णिहिलसुररिउरमणिअणकवो वालतमालवेल्लीदाहा विइण्हपअवग्गी कण्हो णाम आदवाई ।

**देव** :- सोऽहमद्य मृगयाविहारी युष्मद्दर्शनमहाभ्युदयकारणपरि-

---



1. एसण-A. उक्किआ-A.

पाकेन सुकृतेनैव सारङ्गाकारधारिणा समाकृष्टस्तदनु वन्दितरघुनन्दनचरणारविन्दोऽस्य चारामस्य रामणीयकहृतहृदयस्सञ्चरन्निदानीमेतावतोऽभ्युदयस्य पात्रतां यातोऽस्मि ।

**जाम्ब**:- (सानन्दमात्मगतम्) अहो ! महुरंतणं वा आआए । भवरसालादो परिमलोत्ति किं एथ्थअ ।

**चन्द्र** :- महाभाअ ! अज्जक्खु अम्हाण सुप्पहादं अणुणे सुप्पसण्णओ देवआओ । जं एरिसाहिअणो असरिसरूपवल्लो अइसइ अति असस्स इसरिओ दिठ्ठो महाभाओ ।

**जाम्ब**:- (सानन्दमात्मगतम्) हृंदि सव्वगुणाणं समवाओ ! (सानुरागमपाङ्गयति)

**देव** :- (विलोक्य, आत्मगतम्) आः ! कथमङ्कुरतीवास्माकमप्यभिनिवेशकारणम् ! यदियम्—

मुहुस्तरलतारकैर्मुकुलितत्रिभागैर्मुहु-
र्मुहुर्निभृतवल्गितैरनिमिषप्रचारैर्मुहुः ।
मुहुर्विकसदन्तरैर्मुहुरुदञ्चितभ्रूलतैः
करोति नयनाञ्चलैर्मम कथावशेषं मनः ।। ५४ ।।

तदहमपि पृच्छामि । (प्रकाशम्) भद्रे ! वयमपि भवतीनामन्यादृशसौजन्यजनितविश्वासाः पृच्छामः ।

एनां प्रसूय लोकस्य नयनामृतवाहिनीम् ।
यातयामयते कीर्तिं को वा कलशवारिधेः ।। ५५ ।।

कानि नामाक्षराण्यस्याः कर्णायुष्यैककारणम् ।
कथमुद्यानभूरेषा भवतीभिरलङ्कृता ।। ५६ ।।

**चन्द्र** :- (जाम्बवतीं विलोक्य सस्मितम्) सुणादु महाभाओ, सुव्व इह सव्वलोअप्पसिद्धो पुरिं महावीर साहसेक्क सख्खी खणमेत्तलंविअ कुलसि । हरिदिवसहिअ महीमण्डल मेउरजसो दसाणणवस्स दवदहणस्स रामअंदस्स सइवंगणी सख्खावि आमहस्स णंदणो जबवत्तो णाम राआ भल्लूआणं ।

**विदू** :- (अपवार्य) वअस्स ! भल्लूअत्ति वेपइ मे हिअअं ।

**देव** :- मूर्ख ! तूष्णीमास्व ; (प्रकाशं सबहुमानम्) किमुच्यते? अतिप्रसिद्धः खल्वयम् ।

अग्रगण्यो नयवतामादिमस्सत्त्वशालिनाम् ।
शातां धियं नखालीं च यस्य जानाति रावणः ।।५७।।

**चन्द्र** :- इअत्तस्स बीअं अइ सिणेहट्ठाणं अच्चरसा संभमं वंवंय्यवच्चरणं जं ववइत्ति अहिजणणामेण.................... एत्थणादि दूरट्ठिआदो अम्हतादस्स पिआ महदिण्णादो माणवमेत्तेहिं अप्पवेसणिं जादो विलादो आअच्चिअतादणिओ आदोच्छि अपड्डिदि अहणि वत्तणिज्जं रहववदिभवणंस पदिकमणिमिअ आप सुखेलण णिरंतरो

वरूढवीसंभाहि । अम्हेहिं सहिअए इमस्सि उज्जाणंमि बालत्तणजोग्ग विहरंतीए अज्ज भलिअं रहुवइचलण संसूसणा कंपवेल्लीए ।

देव :- (सोल्लासम्) अहो! साक्षात्पद्मासन[1]प्रभवस्य जाम्बवतः कुमारीत्यपर्याप्तिराभिजात्यस्य । असौ गुणानामेकनिवासवासप्रीतिः ।

पौत्री पद्मभुवस्साक्षाल्लावण्यमधुरं वपुः ।
सौजन्यमन्यदुष्प्रापं स्मरसञ्जीवनं वयः ॥ ५८ ॥

जाम्ब:- (सलज्जमधोमुखी तिष्ठति)

(नेपथ्ये कलकलानन्तरम्)

रथवाजिराजिखुरकोटिपटित-
क्षितिधूलिधूसरितपल्लवव्रजाः ।
असुरान्तकस्य हरिणानुयायिनः
प्रथयन्ति मार्गमिह पार्श्वपादपाः ॥ ५९ ॥

(सर्वे आकर्णयन्ति)

देव :- (आत्मगतम्) कथमानन्दान्तरायः !

(सर्वाः सम्भ्रमं नाटयन्ति)

विदू :- वअस्स! अम्हण पारंथिभडा अम्हपआणानुसारेण आहिव्वंति ।



1. सुतस्य-B.

**चन्द्र** :- (सदैन्यमिव) हला ! भट्टिदारिए ! भीतं वख्खु अम्हेहिं । ता अंभंधेहिं महाराअं अम्हे पेसेहित्ति ।

**जाम्ब**:- (सनिर्वेदाशंकम् ; आत्मगतम्) अम्हो ! किं एदं गमणकहा मे तेणच्चिअ अण्णारिसं हि अम्हहिअअं । (प्रकाशम् ; अनुच्चैः) हला ! अणुजाणीहि । अम्हे तादस्समीवगमणाअ ।

**चन्द्र** :- (साकूतम्) महाभाअ ! अम्हट्ठाणं गअस्स तुह सरिसिं किं वि णअअंती लज्जिआ होहि ।

**देव** :- अयि ! भवतीनां सन्दर्शनादन्यत् किमस्ति ? साधयत पुनरवलोकनाय ।

(सर्वाः परिक्रामन्ति)

**जाम्ब**:- (आत्मगतम्) अम्हो ! महचलणा अग्गदोण पवट्टंति ।
(पदे पदे साभिलाषं पश्यन्ती निष्क्रान्ता)

**देव** :- (आत्मगतम्) हन्त !

व्यावर्त्य वक्त्रकमलं वलितप्रचारैः
कर्णान्तकन्दलितकान्तकनीनिकाग्रैः ।
हालाहलप्रसरणप्रतिमैरपाङ्गै-
र्बाला मनो मम बलादपहृत्य याता ॥ ६० ॥

**विदू** :- (स्वगतम्) हद्धि हद्धि ! एसो दाणिं भल्लूअकण्णा हरिअहिओ णअरगमणकहं विणकाहिहित्ति वेवइ मे हिअअम् ।

**देव** :- सखे ! दारुकसन्निधापितं रथमधिष्ठाय सेनानिवेशं गच्छामः ।

( इति निष्क्रान्तास्सर्वे )

**प्रथमोऽङ्कः**



श्रीमत्कृष्णरायमहाराजविरचितं

# जाम्बवतीपरिणयम्

## -- द्वितीयोऽङ्कः --

( ततः प्रविशति प्रतीहारी )

प्रतीहारीः-आणत्तम्हि भट्टिणा कण्हमहाराएण जह विज्जुल्लहे णिवेणहि उग्गसेणं । पसेणप्पमुहाणं सेणावरेण्णं वहुदिअ उव्वेइ अस्सिणण । अज्जीवीसमल्लहेदु । सुवोणिग्गमोहोदित्ति । (परिक्रम्य [1]पुरो विलोक्य) एसाखु भट्टिणो आसंणपरिसारिआ महुरा इदो आअच्छदि ।

( प्रविश्य मधुरा )

मधुराः- (विलोक्य) हला ! विज्जुल्लहे कहिं भट्टा कुदो गच्छीअदि ।

विद्युत् :- (उपसृत्य पुरो विलोक्य) हला ! अब्भन्तरमण्डवट्ठिएण भट्टिणा मिअआभड्डुग्गमणिसेहणत्थं पेसिदह्मि ।

मधुराः- साभेहिजहाणि ओअं ।



1. पुरोऽवलोक्य-A.

(प्रतीहारी निष्क्रान्तः)

**मधुराः**- अच्चरिअं ! अच्चरिअं ! ! एक्कसरिअं हिअअं भट्टिणो हरि अत्तिए भल्लूअराअकण्णा एहि । ओंअआवणादो पडिणिवट्टिअ पविसिअ णिअंखरं सुण्णहि अओविअ किंपि किंपि चिंते रतो सरीराआसव वअसेण परिहरिअत्ते उरप्पवेसो तम्मइ आहिच्चिअकहाहिं किहविदिअ हग्ग-मिअ अणागअणिं दोच्चिअसज्जपरिवय्यणेहिं णिसव्वणी-दवत्तो । णासग्गणि अलिअ अच्छणि हुइ अणीसासणिग्ग-मिट्ठाइ । एव्वंवि पारंयाओ किरिआओ हिदि ण करेइ । (कश्लाघम्) राहामुहो रोहाहीण हिअअं भट्टारविजा उक्क-ण्ठावेइ । साहु सअलरमणीललामभूदा विलआ । (परि-सम्य दृष्ट्वा) एसो भट्टा विसज्जिअसअलपरिआणो अंअ-कुएलेण सह चितासन्निहाविअमणाहम्मि विणोदे इती एकहाहिं अपाणम् । अह दुवाररक्खिणी भविठाइस्सं ।

( निष्क्रान्ता )

**प्रवेशकः**



(ततः प्रविशति चिन्तां नाटयन् देवो विदूषकश्च)

**देव :-** (सानुतापमात्मगतम्)

मनुष्यगणदुर्लभे वसति सा बिलाभ्यन्तरे
मनः किमिति [1]खिद्यसे वद तदीयदुश्चेष्टितैः ।
मनोजविजयावहे वयसि किन्न वामभ्रुवां
भवन्त्यहह दृष्टयः स्फुरितवक्रिमप्रक्रमाः ।। १ ।।

(सविचिकित्सम्)

आमग्नार्ध[2]कनीनिकान्तरलसद्व्यापारलीलारसै-
रायातप्रतिसम्भृतप्रसरणैरक्ष्णोश्चलैरञ्चलैः ।
यान्त्या हन्त मुहुर्विवृत्तवदनं यद्वीक्षितोऽहं तया
तन्मे सम्प्रति मानसस्य महते खेदाय मोदाय च ।। २ ।।

**विदू :-** (सव्यथमात्मगतम्) अंबो! किं करेमि ? गाहिओ एस भल्लूअकण्णाचिन्ताए । होदु एव्वं दाय । (प्रकाशम्) वअस्स ! पम्मुठ्ठा हि जाअणिमत्तणो वह्मणिव्व णिच्चलदिठ्ठी । किं चिन्तेसि ?

**देव :-** (अनाकर्णननमभिनीय ससन्देहमात्मगतम्) तदा खलु माधवीमण्डपाङ्कणे–

मामालोक्य यदृच्छया समुदयल्लज्जाभयाशङ्किता
सा मन्दं सहचारिकां प्रति कमप्यालापमातन्वती ।

---

1. खिद्यते-A.B.C. 2. कनीनिकैरलसव्यापार-B.C. कनीनिकान्तरलसव्यापार-A.

आयाताऽभिमुखं सकम्पमुदयद्घर्माम्बुनम्रानन
किं व्रीडा[1]वृतसाध्वसात्किमु कृपा कामं मनोजन्मनः ।।३।।

**विदू** :- वअस्स ! णं भणामि किं णिच्चलदिठ्ठी भोणं बुहुक्खि-
ओ बह्मणो ।

**देव** :- सखे ! न [2]किमप्यन्यत् ।

मदनविजयान्तरङ्गै[3]रुल्लासिततरुणिमोदयस्फुरणैः ।
आदाय मानसं मे याता सा हन्त गन्धगजयाना ।। ४ ।।

तदाप्रभृति ;

भ्रान्त्वा पद्मवने समेत्य पुलिनं [4]मङ्क्त्वा सरोमण्डले
क्रान्त्वा शैलमवाप्य शङ्खसुषमां प्राप्य प्रवालश्रियम् ।
शैवालप्रकरे निपत्य सुदृशो लावण्यपाथोनिधौ
मन्ये फालफलाग्निकीलपटलैरालीढमस्मन्मनः ।। ५ ।।

किञ्च,

मग्नमिव महति तिमिरे भग्नमिवापातदुस्सहैर्विशिखैः ।
श्रान्तमिव तुङ्गभूधरशृङ्गारोहेण मुह्यति मनो मे ।। ६ ।।

**विदू** :- (सहासम्) वअस्स ! (अच्छरीअं) अच्छरीअं जपलि अ सारि-
अरोमढलीकवइ असरीरं ढोरओरदाढा भीढणदीहार
तुडस्सजरापि सल्ली चमडिअ सअलमासरंत्तरित्तं गस्स-
त्तिरच्छीसु विसोसदो भीसणंस भल्लुअजइणो जंवतस्स

---

1. वृत-A. 2. किमु[illegible]-A. 3. [illegible]-A.B.C.
4. मन्दगत्या सरोमण्डले-A.

तुणि आवितुए अहिणसणिज्जसो भङ्गा जाआ । महुउण एक्कातुणि आहं विअ[1]रूवस्स ।

देव :- (सोत्प्रासम्) सखे ! न कारणगुणानुरोधिनो वेधसो विधान-विशेषाः । पश्य–

निसर्गमलिनात् घनाद्भवति विद्युदुद्योतिनी
स्वभावकठिनाद्गिरेः कुसुमिता लता जायते ।
तरङ्गगणभीषणादभवदम्बुधेरिन्दिरा
तरोर्विटपसङ्कटात्तरुणमञ्जरी जृम्भते ।। ७ ।।

दिदू :- (आत्मगतम्) हंदि ! अमोअणिज्जत्तणं हिअअविक्खेवस्स ।

देव :- (आत्मगतम्) अपि नाम पुनरपि भवेदमृताभिषेचनं लोचनयोः । तदा खलु सा –

आविस्साध्वसमग्रतः प्रियसखीमाधाय लज्जावशात्
किञ्चित्सङ्कुचितान्तरैरवयवैः किञ्जल्कयन्ती मुदम् ।
वाचं वक्रिमगर्भितां मयि [2]वदत्यन्तर्निगूढ[3]स्थितं
तन्वाना मुखमानतं स्थितवती ताटङ्कसक्तेक्षणम् ।। ८ ।।

विदू :- (आत्मगतम्) होदु एवं दाव । (प्रकाशम्)

[4]मोक्कूणराअकज्जं परिअंमणोहराइ सउहाइं ।
कइवाहाइ दिणाइ ठ्ठादव्वं इह चिला[5]अपुंजीए ।। ९ ।।

---



1. रूवस्प-C. रूव-B. रइकाप-A. 2. वदन्त्य-B.C. 3. स्थित-B.
4. मोत्तूणाराआ-A. मोक्कणराअ-B. 5. अवुन्तीए-A.

देव :- सखे ! विहितसकलविधेयानामस्माकं [1]किमपरमनुल्लङ्घनीयं राजकार्यम् ? यतः--

कारागारनिवासिवासवपुरीकान्तानितान्तापत-
न्निश्वासानिलनिर्निरोधविसरद्दीप्रप्रतापानलाः ।
यातास्ते प्रलयं द्विषो दिविषदां कंसादयो दुर्जयाः
किञ्चार्ये भुजवीर्यशालिनि भुवो भारोऽयमारोपितः ॥१०॥

किञ्च, किमिव निदाघदाहदमनाय वनमिवोपकरणम् ?

स्वभावशिशिरस्फुरन्मधुरिम स्रवन्तीजलं
तलाः प्रकृतिशीतलाः प्रतिपदं तरूणाममी ।
कलाश्च शुकशारिकामुखविहङ्गवाग्भङ्गयो
[2]हरन्ति हृदयस्य मे रुचिरहर्म्यवासस्पृहाम् ॥ ११ ॥

विदू :- (सवेदनमिव) वअस्स ! किं कुणमी तुमं जांबवईसमाअमासाए इहच्चिअ दिअहे गमावेसि ।

देव :- (सनिर्वेदम्)

बाणाः पतन्ति शतशः प्रसवायुधस्य
प्राणापहारकरणप्रथितापदानाः ।
प्रायेण सा न सुलभैव परन्तु चेतः
खेदाय केवलमिह व्यतिषक्तमासीत् ॥ १२ ॥



1. किं परं-B.C. 2. भरंति-A.B.C.

विदू :- हंवि चिंतेमि महसंदावसमणं । (सनिःश्वासम्)

दंतुरदीहरतुंडओआडाके अराइ सहंष ।
कलिअहलंदीटिलअं कइ दक्खामि बह्मणंवअणं ॥ १३ ॥

देव :- सखे ! सहस्व कतिचन वासाराणि ।

विदू :- (आत्मगतम्) का गइ ।

देव :- (साशंसमात्मगतम्)

सरोजवनसम्पदा समभिवन्दनीयानना
मदान्धगजमस्तकप्रथिममाननीयस्तनी ।
विकासिवनमेचकोत्पलरुचाऽभिनन्द्येक्षणा
मनोजजयदेवता मम पुरः कदा वा भवेत् ॥ १४ ॥

(सस्मरणम्)

सा तस्मिन्नवमालिकापरिसरे सख्या परीहासतः
श्रुत्वा किञ्चिदिवोदितं समुदयद्भ्रूभङ्ग[1]सङ्गालिकम् ।
आयातप्रतिसंहृतार्धहसितं वक्त्रं वहन्ती तदा
व्रीलालोकविलोकनैरतनुत व्याकोशपद्मांमहीम् ॥ १५ ॥

(नेपथ्ये वैतालिकौ)

प्रथम :- देव ! देवकीनन्दन ! सकलासुरवरवर्णिनीमुखचन्द्रहास-चन्द्रिकाकालजलद ! सुखाय ते भवतु ग्रैष्मिको माध्यन्दिनसमयः । सम्प्रति हि–



1. भगालिकम्-B. वंगालकम्-A.C.

रक्षांसीव तमांसि रश्मिविशिखैराहत्य पाथोरुहां
देवानामिव सम्पदं विरचयन् देदीप्यमानोदयम् ।
कुर्वाणो हरितः प्रतापभरितास्तेजस्विनामग्रणी-
र्भास्वानेष भवानिवावनितले मध्येनभो भासते ।। १६ ।।

द्वितीयः- सम्प्रति हि–

पटीररसपङ्किलां कुचुतटीं कुरङ्गीदृशां
समाश्रयति शीतमप्यधिकजाततापोदयम् ।
कठोरकरकन्दलीकलितशोषणच्छद्मना
सरांसि सलिलं तृषा सकलमापिबन्ति [1]स्वकम् ।। १७ ।।

देव :- (ससन्तापातिशयम्)

कल्पापायविजृम्भमाणदहनज्वालावलीसोदरं
सन्तापं मयि सन्तनोति नितरां पञ्चायुधः पातकी ।
कालोऽप्येष कठोरसूर्यकिरणस्तत्रापि मध्यन्दिनं
सर्वे हन्त मिलन्ति दुःखनिवहा दुर्वेधसो वैशसात् ।। १८ ।।

विदू :- (तापातिशयमभिनयन्) वअस्स ! किं करोमि ?

अत्तो जलइ महत्तो जठरंभी बाडवाणलं हि ओ ।
ओ बाहिं विसूरइरिणा पुरति [2]दवदहणसारिच्छा ।। १९ ।।

देव :- सखे ! [3]प्रयत्नपरिहार्यः खल्वयं तापाभिषङ्गः । तथा हि–



1. स्वकिम्-A. स्वयम्-C. 2. वदवहण-A.B.C. 3. प्रलय-B.

चलितवलयं शातोदर्या शनैरुपवीजितः
शिशिरशिशिरान् हारान्नीहारगौररुचो वहन् ।
मलयजरसालेपः कालं कठोरममुं मुदा
नयति सुकृती धारागारान्तरालकृतासिकः ॥ २० ॥

**विदू** :- (साक्षेपम्) वअस्स ! पहाणच्चिअ विहारिअं तुए ।

पाडलसुरभिसलिलं दक्खा पलआइ सक्करापाणा ।
इंदर आइं दजाइं जत्ताइं भुअंति धण्णा णिदाहम्मि ॥ २१ ॥

**देव** :- अयन्तु–

वहतु तुहिनासारैः कालोऽपि दुर्दिनतां सदा
कलयतु दिवारात्रं सञ्चारितां हिमदीधितिः ।
भवतु पृथिवी पूर्णा नित्यं सुधारसवीचिभि–
र्मदनदहनोद्दाहः सोढुं तथापि न शक्यते ॥ २२ ॥

किन्तु ;

अम्भोजराजकदलीपुलिनह्रदानां
शैवालचक्रयुगचम्पकमालिकानाम् ।
शीतांशुवारिधरयोर्यदि सन्निवेशो
[1]दृष्टः क्रमाद्गलति तीव्रतरोऽपि तापः ॥ २३ ॥

**विदू** :- (सहासस्पृहम्) वअस्स ! महाविज्जहिं छावत्तमिव अणेजइ पडइ आसादो कोवि अइसरि.......................... आमअ सोरहो दिव्वभलरसासारो । ताहे पसंमइच्छुहाणलो वितक्केमि ।



---

1. दृष्टः-A.

देवः - सखे ! नायं परिहासावसरः । तत्कथय कथमिदं अशक्योपचरणमशरणमन्तःकरणं [1]विनोदयाम इदानीम् ?

[2]कुकूलपटले मनः कलयतीव निर्लोठनं
करोति कुसुमाशुगः किमपि भीममोजायितम् ।
वपुर्ज्वलति केवलं [3]विषरसे निमग्नं यथा
विपच्यत इवानले विपुलयातना चेतना ।। २४ ।।

विदू :- (सनिर्वेदमात्मगतम्) हिदि किं करेमि ? पुणो पुणाइवि एस वअस्सो अदिक्कमत्तंमिवि मज्झंणे ण्हणहाणभोअणकहंवि ण विआरेइ ।

णवरहमलूअधूआ विलासहिअओ तम्मइअं ।
विअ सअलं किलंतो किलत्तो विअहाइ ।। २५ ।।

होदु एव्व दाव (प्रकाशम्) वसे किदि आउणत्तणं दव्वहसि माआए मअणिद्दजालिअस्स ।

देव :- (विभाव्य)

वहति पुलिनमुच्चैः कञ्चिदावर्तमारात्
लसति वियति शैलद्वन्द्वमुन्नेयभेदम् ।
श्रयति तिमिररेखा चन्द्रसौहार्दमुद्रां
(कुवलययुगमेतद्राजते पद्ममध्ये) ।। २६ ।।

---



1. [illegible]-B.C. [illegible]-A. 2. [illegible]-A.B.C.
3. विषरसेऽतिमग्नं-A.

**विदू** :- (आत्मगतम्) अब्बो ! किं करेमि ? असंबद्धं पलविदुं आढत्तो वअस्सो ।

**देव**: - (सानुतापौत्सुक्यम्)

विद्योतयेत नितरामद्याऽप्युद्यानमुत्पलदलाक्षी ।
सञ्चारखिन्नलतिका सन्देहा सहचरीसहिता ।। २७ ।।

**विदू** :- (ससम्भ्रमम्) वअस्स ! [1]किंकिणिसिहिओ मिअआविहा-[2]रज्जोओ तुमए । एदिण वव एसेण तं एव्व उज्जाणं पविसिअ विसमपिसिहविसूरंत तुम्ह हिअआमअसोत्ति-आए तीए विहारट्ठाणसंदस्सणेण सहिज्जइखु हिअअसं-दावो । दिठ्ठिआ सावि जइ सण्णिहा जा एज्जण अणा-णच्छुहा पारणा तुज्ञ ।

**देव** :- सखे ! साधु समवहितं त्वया । तथापि व्यतीतायां निशि कुसुमविशिखबाणपातनिश्चेतनान्तःकरणतया श-रीरायासव्यपदेशेन परिहृतान्तःपुरप्रवेशेन मयाऽद्यैव यदि मृगयायै गम्येत किमपि शङ्केत सङ्केतभङ्गात्कदाचिदपि विरोधासहं राधाहृदयम् । किञ्च,

तस्या मनस्तामरसेक्षणायाः
कामप्रसादात्करुणारसार्द्रम् ।
न वा न जाने मम चित्तवृत्तेः
पारिप्लवत्वं प्रकटीकृतं स्यात् ।। २८ ।।



1. किंत्तिणिसीहिओ-A. 2. रुज्जोओतुम्हे-A.

**विदू :-** (सभ्रुकुटिबन्धम्) वअस्स ! किण्ण णज्जइ तुए मह विमद्द-मइणो वक्खाणि अच्चिअ हिअअं । तीए सरअ [1]विलंभंत जोडिज्जंत किरणसत्तंच विसट्टकंदुं अपलासपेसलेहिं हलामअ विवसहलिभला अम्माणसमुल्लोल जइ उण कंलोलसिरेहिं लज्जाणु राअजणिअगअगअ खेअसंजादेसे अबंधुसंदहिआणंद बाहप्पसरेहिं कण्णत्तकलिअखेलणेहिं तिरिच्चिलोअणेहिं ।

**देव :-** (सानन्दम्) आम् सखे ! आम् ।

मन्दानिलाकम्पिनवारविन्द–
सन्दोहसन्देहवदान्यभावैः ।
चेतो हृतं मे चपलेक्षणायाः
धारालताराललितैरपाङ्गैः ।। २९ ।।

किन्तु,

कन्दर्पगन्धगजदान[2]समुद्गमेन
शृङ्गारनीरनिधिशीतकरोदयेन ।
लीलाविलासलतिकामधुजृम्भणेन
केनापि हन्त वयसा ननु सा गृहीता ।। ३० ।।

आतश्च,

हासा विलासललिता वक्रिमसुरभीणि नयनवलनानि ।
जायन्ते हि निसर्गाद्वयसि स्मरसहजसुहृदि सञ्जाते ।।३१।।

---



1. विअं इब्भंत-C. विअइंभंत-B. 2. समुद्भवेन-B.

**विदू** :- (सकोपमिव) वअस्स ! किज्जंन्धव्वई एताओ दुवेवि सहीओ किसोरीओ अहवजरठाओ किकिदाहिं दुरादो एव्व वासंतिआसदणसमीपसच्चारिणं तुमं दठ्ठूणतक्खणं पण्णकप्पविसदुलोरुलठ्ठि पच्चंखिअ पवाअ पवाअकेलिकं सविब्भम क्खलीतचलणणिक्खेव चलत्तणिउरणिणअ मणहर तक्कालसंजाअलज्जाणुराअ गअकोउहल्लविम्म असमकाल विइ भत्त णाणाहावलोललोअणं पहालहरिसं सदसिअमंदाअणी कलिद आसोण संहेअ संगमण्णा साइओ । [1]तदो-असक्कझ सावेअ परवसं बहुविलासपेसलं किह किहविण सक्कलआ अज्जली । णमिअवअणं सहसरी सरीरत्तरि असठ्ठाणं सहिअण पुलइअ कवोलअलपुरत्ता पुलअं कूरवेलक्ख तरलक सक्ख णिक्खिवण णिलुम्पलमं रक्कअ महीआअण्णो वपिसिअं । ततो वि तेसु तेसु अवत्थंतरेसु कण्णंतकंदलिअकणीणिअ रुप्पसरसवलिअ वअस्स किसलेहि विह्मअथ्थिमि । अपह्मउडणिज्जलणी सद्दाणद्द बाहुबिन्दुसुन्दरेहिं अय्यसिणिद्धवलिअ ललिअपसरिअ परिहअ संकूअणि पफंदमंदकंत तंतपसरेहिं कसंखेहिं तिरिच्छिणं पेच्छिओसि । तसिं अगमणसमए पडिणिवठ्ठिअ दीसंत दइणस्सदावसझ सवअसो णदंसिओ ।

**देव** :- (सरोमांचम्) अस्त्येतत् ।

तथापि मे तादृशि भागधेये
सन्दिह्य सम्भावनगोचरत्वम् ।



1. तदो असंकर्यसावेअ-A. तदो असकझसावेअ-C.

मनो न विश्वासमुपैति कामं
कृपाविपाकं प्रति किं करोमि ।। ३२ ।।

**विदू** :- अविसा सोखु सअलसंदेहहेदू ।

**देव** :- (सस्मरणौत्सुक्यम्)

सा मन्दं विनिधाय पञ्चषपदान्यग्रे सखीभ्यां समं
पश्यन्ती परिवृत्य मामसकलव्यापारितैरीक्षितैः ।
यत्किञ्चिद्व्यपदिश्य सा कृतवती भूयो विलम्बं क्षणं
लज्जालोलविलोचनान्तविवलत्तारेण वक्त्रेन्दुना ।। ३३ ।।

( साशंसम् )

ताटङ्ककोटितरलीभवदीक्षणान्तं
ताम्राधराक्रमणसंशयितार्धहासम् ।
तस्यास्तदाननसुधाकरबिम्बमक्ष्णोः
भूयः पुरो भवति किं मम पुण्यपाकात् ।। ३४ ।।

**विदू** :- [1]अव्वो किं करेमि ? विवितदाए जहिच्छ पलवइ वअ-
स्सो । ण कावि अएद्ध परिचारिआसु ।

( प्रविश्य मधुरा )

**मधुरा**:- (विलोक्य) णं एस देवो कुएलेण सह किंपि जप्प । जंब-
वईमएहिं आलावहि होदव्वं । जइ देवी परिअणेण केण
वि सुणिओ एस वुत्तन्तो महत्तो पमादो होज्ज । ता



1. अम्हो-B.

अहं दुवाररक्खिणी भविअ ठ्ठाइस्स । (तथा करोति)

( ततः प्रविशति देवी विभवतश्च परिवारः )

**देवी** :- (आत्मगतम्) किणु वा अंअउत्तो हिओ रत्तीए सरीरा आसोत्ति महसंदिट्ठवंतो । अज्ज विपरिहरिअ पारत्तिकेलि अदिक्कमत्तम्मि विमज्झणण्णे अभ्भुतंत भोअणाइ णविरोइ । ता किणेदं अण्णारिसंविअ पडिभादि । होदु भंआण विआरेमि । (प्रकाशम्) हंजे ! मणिमालिए अंअउत्तावठ्ठाणमण्डवस्स मग्गं उवदिस ।

**मणि** :- इदो इदो भट्टिणी ।

(सर्वाः परिक्रामन्ति)

**देव** :- वयस्य ! कथमिव घटेत कामना कामनाराचकातरस्य मनसः ?

**विदू** :- वअस्स ! किं चिंतेसि ? सुवो मिअआविहारविणिग्गदस्स तुह णअणगोअरी होहिइ सा ।

**देव** :- प्रतिगृहीतं ब्राह्मणवचनम् ।

**मधुरा**:- (विलोक्य) हंमि देवीसअ एव्व समावसइ । ता णिवेदेमि देवस्स । (उपसृत्य) भट्ट ! देवी समावसइ ।

**विदू** :- [1]उज्जीविअह्मि भोणलाहेण ।



1. भजीविअह्म-B.C.

**देव :-** (सावहित्थसम्भ्रमम्) इदं प्रत्युद्गम्यते । (उत्थाय) सखे ! न चापलमाचर ।

**विदू :-** किमिणप्प भणिदंवं ? कहिकरिअ पुखम्मए चावलं । (परिक्रामतः)

**देवी :-** (विलोक्य) ण एस अंअउत्तो अह्मण अहिमुहि आअच्छइ । (इति त्वरितपदं परिक्रामति)

**देव :-** (दृष्ट्वा)

कर्णश्रान्तिकदर्थनं विदधती कामागमव्याक्रिया-
भेदैः पादसरोरुहद्वयरणन्मञ्जीरनादामृतैः ।
देवीयं समुपैति सम्भ्रमचल[1]द्वक्षोजविक्षोभण-
त्रस्यन्मध्यविमुक्तनादलहरीसम्भाव्यकाञ्चीरवा ॥ ३५ ॥

हन्त ! विजृम्भमाणमस्यां [2]यौवनप्रौढेः ! तथा हि-

दत्तेनैव पदं विलास[3]पदवीं मुक्त्वा दृशोरञ्चलं
भ्रूवल्ली भवतीव वक्रिममये मग्ना महास्रोतसि ।
कौशेयं मुखमात्रमेव कुचयोरावृत्य सन्तिष्ठते
पादस्सत्वरचङ्क्रमस्य च कथामात्रं न सम्मन्यते ॥ ३६ ॥

**विदू :-** (जनान्तिकम्) अदो एव्व तुमं अणप्पोढजोव्वणाभिलासी ।

**देव :-** (सतर्जनम्) वराक ! विरम, नायमवसरस्सल्लापानाम् ।

---

1. [illegible] -A. द्वक्षोज[illegible] -C. 2. यौवनप्रौढैः-C.

3. पदवीमुक्त्वा-C. पदवी मुक्ता-B.

**देवी** :- (उपसृत्य) जेदु अंअउत्तो ।

**देव** :- देवि ! इत आगम्यताम् ।

**देवी** :- (उपसृत्य निर्वर्ण्य च सकोपहासम्)

अंअउत्त ! अण्णारिसो देसट्ठाण विसेसो भोढग्गचन्दसरिअं वअणं पज्झिअत्तणं भणइ । डिढ्ढीअवंगरत्तापज्जाअरं कहं इराइए । ता कहेसु छोलहस हंस भोविआ मज्जारम्मि कं सुमरिअ एव्वं संवुत्तोसि ।

**विदू** :- (अपवार्य) वअस्स ! णमुणइ तवस्सिणीअणभ्भं असिणिअ पाअं ।

**देव**: :- मूढ ! तूष्णीमास्व । प्रिये ! मैवं स्म मनसि कृथाः ।

अन्या भवन्तु शतशोऽथ सहस्रशो वा
देवि त्वमेव रति[1]कामगवी सदा मे ।
ताराः स्फुरन्तु शतशो गगनान्तराले
चन्द्रद्युतिः खलु चकोरमनःप्रसक्त्यै ।। ३७ ।।

**देवी** :- (समन्दस्मितम्) णज्ज इज्जिअ तुह च सुवअणविज्जा वेसज्जे । होदु किं इमीणचिन्ताए करेदु अंअउत्तो दिअहकरणिज्ज ।

**विदू** :- देवी ! रख्खणिज्जो बुभुक्खारक्खसीगहिओ बह्मणो ।

---



1. कामदवी-A.C.

देवी :- (आत्मगतम्) होदु णंपदारिअ अंअउत्तहिअअविक्खेवकारणं जाणस्सं । (प्रकाशम्) कुएल.................. एमहघरंचि-अ होत्तव्वं ।

विदू :- हद्दि ! जितं मए । (नृत्यति)

देव :- देवि ! गच्छाभ्यन्तरम्, वयमपि स्नानभूमिमवतीर्णा एव ।

देवी :- जं अंअउत्तो आणवेदि ।

(सपरिवारा निष्क्रान्ता)

देव :-

साकं सखीभ्यां सुश्रोणी
सा किं जाम्बवतस्सुता ।
[1]दृश्येत दीर्घनयना
दिष्ट्या दृष्ट्याऽनया मया ।। ३८ ।।

(निष्क्रान्तास्सर्वे)

द्वितीयोऽङ्कः



1. दृश्ये तदीयघनघना-A.

## श्रीमत्कृष्णरायमहाराजविरचितं

# जाम्बवतीपरिणयम्

## -- तृतीयोऽङ्कः --

(ततः प्रविशति चन्द्रलेखा)

**चन्द्र :-** आणत्तं हि रहुरमणधरपडिकंमवाउडा भट्टिदारिआए, जह हला! चन्दलेहे मह कोवि अण्णारिसो संदावो। वंशालेइअअं बाडि हिव्विडहइ। ता तुमं तुरिअं गाच्छिअ सज्जीकरेहि माहवीमण्डवंमि सिसिरोवआरोदअणा इत्ति। मए विडम्बं सज्जिअं। (निश्वस्य) तस्स सुहअस्सा दंसणादो आरहिअ एरिसो अवत्थाविसेसो पअसभीए। तस्स मअदिअहे तेण विसणिज्जआ णिव्वत्तिअ वअणं तं एव्वं पेक्खती रुक्खपत्ति अंतरिअ दस्सणम्मि। सुह-अंमि तक्खणव्वण्ण संदावा दीहरणस्सास वेअं वेविअ कुरललया उब्भिभण्ण रुंहिअ बाहबज्झाउललोअणा ओण-मिअवअणं अम्हेहिं विणालवंतीप एव एवलती पुणो पुणाइ वितस्स चिअगमणसरणिं पलोअंती विलपविम्रि-



अवई। तदो अगच्छंतिच्चिअ सअणं सअणघरं पविसिअ

तल्लपहलत्थ सरीरलट्ठिओ उट्ठिअ मुहिठिअवई । तदो अदिक्कमत्तम्मिसमए अह्माण साणुरोहेण वअणेण किह विविहिअसरीर उत्तिपुणो विणिग्गच्छिअ माहवीमंडवं भणम्मि किंपि किंपि सुमरिअ दीहं दीहंण्णी ससंती चरमसेलसूलाचुम्बिबिम्बम्मि अंवरमणिमिअं देदरमहंतरिअ एधती एमं आसिआ एहंकारीआ घरं गअवई । अरइ गहिआपआ अरेणं चिअणि सग्गमि अवई । हिओतस्स अं दस्सणेण किंपि सस्सअणिज्जदिस्सं गआ पिअसही । दाणिंपि लज्जा एव बहुसो पुच्छदाण कहेइ हिअअगअं (सास्राशंसम्) अज्ज इमिअ उज्जोएण सुहअसेहरो इह समावसइ जीवेप्पिअसही अण्णहा किहासिदिव्वि देव्वं एव्वं जाणादि कहिअंहु किनरवइणाणाइ दूरेच्चिअ चिट्ठइ । तस्स खव्दावरोत्ति । (परिक्रम्य पुरोऽवलोक्य) एसा भट्टिदारिआ इदो एव्व आअच्चिइ । पच्चग्गपड्डिमेहिं अंगेहिं अभिदोंबेला । णिव्वेअतावदुह समसमवाअ सिरिंवकाविणिं [1]वडिअ । (निष्क्रान्त।)

## [2]प्रवेशकः



(ततः प्रविशति जाम्बवती सख्यौ च)

**जाम्बः**- (दीर्घमुष्णं च निश्वस्य, आतमगतम् ) अच्छरिअं! अच्छरिअं !! जं महविदहिअ अत्तणो सुमरण मेत्तस्स विअ संभाविदं ।



1. पन्धिआ-A. मेत्तस्सविअ संभावितं-C. 2. शुद्धविष्कम्भः-A.B.C.

अत्थअमत्थिअ मोरुल्लावल्लेविदसद्दावं होदि (सनिर्वेदम्) हंदि ताहेतारिसं भाअहेअं मुहुत्तहुत्तं करिअभक्खणच्चिअइ। भराकूणत्तेण देव्वेण अत्तणो किं उवलध्दिं (अनुसन्धाय सपुलकम्) बेहुण वलइ असिसो घुसिमर अच्छुरिअ विअडवच्छ [1]अडो दाणिं वि। पुरूप्यरोमहरं विअ सिरसरसिरुहसरिसण अणोसो।

(इति स्तैमित्यं नाटयति)

**कुमुदिनी**:- (विलोक्य, आत्मगतम्) अम्हो! किं कुणिमो णुमग्गच्चिअए अतस्स सुखअचूडामणिणो लाअण्णं भदंहि। (प्रकाशम्) अयि! भट्टिदारिए! किं एदं अण्णारिसिं विपरीदम्मिवि मग्गे पए पए खलसि? पेक्खिअं गच्छणिरत्तर णिवसल्लं अभुरससोत्तणिव्वत्तिअ पिच्छिलत्तणं मग्गं।

**जाम्ब**:- (सविलक्षणम्) हला! तहं चिणअ जामिकंप एसं उद्दिसि [2]अराच्छिअदि।

**चन्द्र** :- भट्टिदारिए! सज्जीकअ सअलसिसिरोवआरो माहवीमंडपं गच्छीअदि। [3]इदो इदो पिअसही।

(सर्वा: परिक्रामन्ति)

**चन्द्र** :- (जनान्तिकम्) हला! कुमुइणि! जुत्तणिमक्खु असरिस-

---

1. अडो दाणि विपुरूप्यरोमहरं.........B.C. विपुरइपु। रोमहरोमह। [illegible] A. 2. [illegible]-A. 3. [illegible] नास्ति-B. नास्ति-C.

गुणणिहाणेण । अणण्णसामण्णसमग्गसो हग्गे महाउल पसूदत्ति महाभाए दिठ्ठं ओल[1]ग्गच्छद्दा भट्टिदारिआ सरिसो हि विज्जुलाए जलहराहिलासो । किन्तु दंसणादो च्चिअ एव्वं संवुत्तोत्ति दुक्करं खुएदि ।

**कुमु** :- किंदि भणिमि ? देव्व [2]एव्व जाणादि ।

**जाम्ब**:- हला ! केत्तिअम्मि दूरे माहवीमंडवो ।

**चन्द्र** :- भट्टिदारिए ! किं अमुणंतीविअ पुच्छसि ? संणिहिओ खु माहवीमंडवो ।

**जाम्ब**:- (सर्वतो विलोक्य, आत्मगतम्) हद्दि ! एक्कस्सिं च्चिअ खणे विहिणो विवरीद दाए जयप्परिवट्टअं वसंवुत्तं । तह हि-

जाण कुसुमप्परोहे पुडमम्मि विआसि अज्झ संतोसो ।
एण हिते एव्व दुमा कुसुमिअ साहा कुणिति संदावं ।। १ ।।

**कुमु** :- हला ! भट्टिदारिए ! [3]सो एसो माहवीमंडवो । पविसेविणं तावसमणस्स ।

**जाम्ब**:- ( दीर्घमुष्णं च निश्वस्य, आत्मगतम्) कुदो वे तावसमणस्सं आणवक्खन्तीए । (साशंसम्)

होज्ज किणो पणाहि किरि आहि पुरिमजह्मकरिआहि ।
मह पुरदो कअमिअआ वेसो जणण अणसुअसि उम्मेसो ।।२।।

(सर्वाः प्रवेशमभिनीयोपविशन्ति )

---

1. ग्गच्छंता-A. ग्गच्छद्दा-C. ग्गच्छ्हा-B. 2. नास्ति-B.C. 3. सो-माहवी-A. एसो माहवी-B.

(ततः प्रविशति मदनावस्थां नाटयन् देवो रथेन सूतश्च)

**देव :-** (सौत्सुक्यमात्मगतम्)

अपि नाम भवेद्दृशोः पुरस्ता-
दरविन्दासनवैदुषीविशेषः ।
वदनेन विलासहासभाजा
वलमानालकवेल्लितालकेन ।। ३ ।।

(प्रकाशम्) दारुक ! तदिदं खलु [1]रावणरमणीरमणीयताकैर-वाकररजनीविरामस्य भगवतो रामस्यायतनम् । तन्निवारय रथतुरगान् यावदवरोहामि ।

**दारुकः-** (तथा कृत्वा) अवतरत्वायुष्मान् ।

**देवः -** (अवतरणनाटितकेन) दारुक ! यावदह[2]मस्मिन्नभ्यातपमनेहसमतिवाह्य परापतामि तावदिहानुयात्रिकोपरोधं निषेधय ।

**दारुकः-** यदादिशत्यायुष्मान् (इति सरथो निष्क्रान्तः)

**देव :-** (परिक्रम्य साशंकनिर्वेदम्)

विद्धो हालहलाग्निहेतिविषमैश्चेतोभुवस्सायकै-
रारामं बहुरामणीयकममुं गाहे [3]विदाहेरितः ।
सा नो चेदिह गोचरं नयनयो[4]र्यातस्य जाता पुन-
र्जायेत ज्वलने ज्वलत्यपि [5]पुरैवाज्याहुतिक्षेपणम् ।। ४ ।।

---

1. रावणरमणीयता-A, 2. मस्मिभ्यापतपमनेहस-A ...C. अस्मभ्यातपमनेहस-B. 3. विगाहेरितः-C. 4. यातस्य-A.B.C. 5. परेराज्याहुति-A.B.C.

**चन्द्र** :- भट्टिदारिए! पुलो एहि भिसिणी पलाससेस्सेजासज्जा। ता इह्णिक्खि विअ तणुलअसंदावं विणोदेहि।

**जाम्बः**:- (आत्मगतम्) कुदो मे तावसमणं? [1]दुल्लहाणि णिवेसदूमिआए। (तथा कृत्वा) हद्दि विवरीदत्तणं विहिणो पल्लवत्तलंवि इग्गालसग्गलिअंविअ संदावेइ।

**देव** :- [2]इदं हि रामायतनद्वारम्। तदहमभिवन्द्य मनोरथसिद्धये महारथं दाशरथिमाराममवगाहिष्ये। (गर्भगृहप्रवेशमभिनीय परितोऽवलोक्य) उद्यानप्रवेशो नाम विरहिणो दाह[3]ज्वरिणः शरदातपोपलम्भः (अनुसन्धाय) अथ वा,

भञ्जन् पल्लवसम्पदं परिभवन् रम्भाप्रकाण्डश्रियं
लीलाद्रीनवधीरयन् मधुकरश्रेणीं वृथा भावयन्।
गुच्छानामवमाननं विरचयन्निन्दन् स्थलाम्भोरुहं
तापिंछालितिरस्क्रियाञ्च कलयन् तापापनोदं भजे ॥ ५ ॥

**जाम्बः**:- हला! किं करेमि? खणेवि उणिओ होइ संदावो। (कातर्यं नाटयति)

**देव** :- (परिक्रामन् विलोक्य) अयं मनोरथप्रियतमाप्रथमविलोकनमहाभ्युदयसाक्षी प्रदेशः।

अत्रापचायमकरोन्नवमालिकानां
(अन्यतो दत्तदृष्टिः)

---

1. दुल्लहाहिणिवे। सदूमिआए-A. दुल्लहाणि वेसदूमिआए-B. दुल्लहाणि णिवेसदूमिआए-C. 2. नास्तीदं वाक्यम्-C. 3. ज्वरिणमशरदा-A. ज्वरिणः शरदा-B. ज्वरिणाऽशारदा-C.

अत्रावतंसितमशोकनवप्रवालम् ।

(परत्र दृष्ट्वा)

रोषं मृषा सहचरीपरिहासवाक्यै-
रत्राकरोदहह सा हरिणायताक्षी ॥ ६ ॥

(सोन्मादम्) अये ! फलितं मे भागधेयेन । यदियं-

विसृमरविलासहासा विलसति वलमानलोचना बाला ।

(विभाव्य सनिर्वेदम्)

नवमालिकालतेयं नवकुसुमामोदविवशषट्चरणा ॥ ७ ॥

(निमित्तं सूचयित्वा)

भुज स्फुरसि केवलं भवति रे कुतस्तत्फलं
दृशोरपि न गोचरीभवति सा विधेश्चातुरी ।

अथ वा

विसृज्य निजवक्रतां विसृमरप्रसादोदये
न किन्नु सुलभं भवेन्नलिनसम्भवस्याशये ॥ ८ ॥

कुम्भु :- (जनान्तिकम्) चंदलेहे ! एव्वं संतवंती पडिखाणं अण्णारिसं दीसइ भट्टिदारिआ । को एद्ध उवाओ ।

देव :- भवतु, प्रियतमाप्रथमसंलापमहोपकारिणं माधवीमण्डपमेव गच्छामि । (परिक्रामन् विलोक्य सानन्दरोमांचम्).

वासन्तिकागृहसमीपमनु प्रयान्ती

काचित्तले सिकतिले पतितैःपरागैः ।

सन्दृश्यते मृदुपदाब्जनिवेशरेखा
कामत्रिलोकविजयाक्षरमालिकेव ॥ ९ ॥

(साशंसम्) प्रायेण माधवीमण्डपे सन्निहितया दयितया भवितव्यम् । हन्त ! केन वा विभाव्यते करुणाविलासो भगवतः कमलासनस्य ? (सत्वरं परिक्रम्य) तदिदं माधवी-मण्डपद्वारम् । तल्लतान्तरित एव पश्यामि । (तथा कृत्वा, सानन्दोल्लासम्) हन्त ! निरतिशयानन्दनिष्यन्दप्रवाहा-वगाहो लोचनयुगलस्य । [1]यदयमपरोक्षति–

प्रसवास्त्रपराक्रमप्रपञ्चो
नयनानन्दनचन्द्रिकाप्रवाहः ।
सकलेन्द्रियमोहसन्निवेशो
नवलावण्यसुधामयः [2]पदार्थः ॥ १० ॥

(विभाव्य) हन्त ! किमेतदसमबाणपराक्रमाक्रान्तेव लक्ष्यते विशालाक्षी । तथा ह्यस्याः

कर्णोपान्तगतार्धतारमसृणव्यापारनेत्राञ्चलं
बाष्पाम्बुप्लुतपाण्डुगण्डफलकव्याकीर्णचूर्णालकम् ।
[3]निश्वासैर्ग्लपिताधरद्युति [4]परं निस्सीमसञ्चारिभि
र्वाचं हन्त विनैव वक्त्रकमलं व्याख्याति चित्तव्यथाम् ॥११॥

अहह ! कस्मै प्रसीदति भगवान् पञ्चबाणः ।

---

1. [illegible]-A. यदयं परोक्षति-B. 2. विलासः-B. 3. निश्वास-ग्लपिता-C. 4. पदं-B.C.

परिलुठति मृगाक्षी पद्मिनीपत्रतल्पे
दिनतरुणिमताप[1]प्लोषिता वल्लरीव ।
अविरलपरिवाहे हन्त लावण्यपूरे
कृशमपि वपुरस्या दूरतो दुर्विभाव्यम् ॥ १२ ॥

भवतु, लतान्तरित एव सम्भावयामि विस्रम्भसम्भाषितान्यासाम् ।

(तथा करोति)

**चन्द्र** :- (अपवार्य) कुमुइणि ! तस्स दस्सणं अंतरेण को अण्णो उवाओ [2]फणीअइ । होदु, तस्स [3]चिह सक्कहाए खणविणो [4]इत करेह्म ।

**कुमु** :- हला ! चन्दलेहे ! बहुसो पुच्छिअवि ण कहेहि लज्जाए हिअअगअं । दाणिं णिब्बडिअ [5]पुज्छीअदु ।

**चन्द्र** :- तह । (प्रकाशम्) हला ! भट्टिदारिए ! किं एदं ? अप्पणिव्विसेसासु अह्मासु अविसासो तुह हिअअस्स । जं एव्वं संववत्ती बहुसो पुच्छिदावि ण कहेसि हिअअगअं । मोक्कुण घुंघुसिअं भणसु किं एदं ।

**कुमु** :- हला ! तुमं अजंबवइव्व पडिभासि ।
जअं अह्माणं विणुमेसि ।

**देव** :- (साशंकम्) असम्भाव्यः खलु महानभ्युदयः ! यतः –

---

1. प्रोषिता-A.B.C. 2. [illegible]-B.C. 3. [illegible]-A. 4. [illegible] रेह्म-A. 5. पुच्छीअद-A.

सरसरचनैस्सखीनां वचनैरस्याश्च सुललितैर्भावैः ।
सर्वमपि जानतो मे चेतः किं वक्ष्यतीति संशेते ॥ १३ ॥

शृणोमि तावत् ।

**जाम्बः**- (आत्मगतम्) हद्दि ! किं [1]कुणिमि ? कथं कहेमि ? ओहसणिज्जं अहवमुणइ इरमहहद हिअअं किं ओरज्झं एदाहिं। (उत्थाय प्रकाशं, बाष्पं विकिरन्ती) हला ! किं कहेमि ? असंभवणिज्जओहसणिज्जंवि । ताहे इमस्स माहवीमंडवस्स परिसरम्मि चन्दसोम्मगहिरमहुरा किंपि एत्थ आवडिओ महाभाओ ।

**देव** :- हृदय ! किमिति व्यथसे कथामध्य एव ?

**जाम्बः**- (सरोमांचम्)

तंगहिअमअउवेडं मुहअंदं पुरिअदरहासं ।
कण्वण्णहलचलाहमालिकसिणंग कंतिपभ्भारि ॥ १४ ॥

(इत्यर्धोक्ते स्तैमित्यं नाटयति)

**देव** :- हन्त ! फलितमेव मे कन्दर्पकरुणाकल्पलतया (विभाव्य) हन्त ! किमिदमवस्थान्तरम् ? अस्याः खलु –

[2]पुलककलकापूर्णाभोगं कपोलयुगं वल-
न्मसृणपवनापाताकम्पिप्रवालसमोऽधरः ।



1. कुणुमि-B. 2. पुलकरुलका-A.B.C.

कुचमुकुलयोः [1]कम्पे [2]निःश्वासनिर्गममन्दतां
मसृणमुकुलोद्वेल्लत्तारातरंगितमीक्षितम् ॥ १५ ॥

**चन्द्र** :- (मन्दमास्फाल्य) हला ! भट्टिदारिए ! किं एव्वं कादरासि ? सट्ठाविअ हिअअं कहेसु ।

**जाम्ब**:- (सविलक्षनिर्वेदम्) अपि आरिअरिअ आआमि दुक्खं अविगणंअलज्जं । अमुणिअकाणं वम्मए वारं वारं जंतं पिचवलदाए । ओहिरिअ मज्झवणं हदहिअअं अणुसरिसगअं । (सास्रम्) हला ! पिअसहीओ ! मुद्धत्तणेण्णो विण्णादसेवासंविहाणमिणं महसो सुभअसेखरो दाक्खिणेण सअलपरिअणसमण्णं विआरेइणवेत्ति दिवाणि सत्तवतीह महणाहारम्मि रूइण तुम्हासु वीसंभसंभासि अणंमिदिअहम्मि । उइदवावकरणं णणिसाएणिदा । णवरमुररवज्झपडिअंवकाल ऊडकल्लवीलि एव्व वट्ठामि । (मदनकातर्यं नाटयति)

**देव** :- हन्त ! मौग्ध्यानुरागनिर्वेदमांसलान्यक्षराणि । (निर्वर्ण्य सदैन्यम्) किमिति विभाव्यते दशान्तरमेतस्याः ?

बाणैः प्राणसमीरणापकरणप्रावीण्यपारङ्गतै-
र्दूना चित्तभुवो दिशासु दिशती दीनावतारा दृशः ।
बाष्पाम्भःपरिवाहिनीं विदधती पाडुं कपोलस्थलीं
नीता निष्करुणेन दग्धविधिना निर्वेदहस्तं प्रिया ॥ १६ ॥



1. कम्पो-A.B.C. 2. निश्वास-B.

हन्त ! नैतावताऽपि पर्याप्तं हतहृदयस्य । अथ वा

यूनोः परस्परालापज्वलन्मानसदाहयोः ।
सङ्गमादतिरिच्यन्ते रागोद्गारकिरो गिरः ॥ १७ ॥

**चन्द्र** :- (जनान्तिकम्) कुमुइणि ! सुणिअं किणो इमीए मुद्धत्तण-मणहरं वअणं । ता किलिसं इमाए । (प्रकाशम्) हला ! भट्टिदारिए ! किंति अविआरिअ अम्हे हिअअं पेसिअंती उण तस्स चंदसीअलसहावस्स सक्कालविसेसेहिं तुमं विम्हरिअ तहिच्चिअ सुहं ठाहिइ ।

**जाम्ब**:- (सनिर्वेदम्) सहि जइवि तहजीविउप्पारिज्जइ । तह विस-इ आसत्तविइ हदहिअअं । (तापातिशयमभिनयति)

**कुमु** :- ण इमो ओसरो परिहासस्स । खणे खणे खु दूसहो सन्तावो सहिए । पेंख अत्तलवत्तले हि पोमिणि पलास-तल्लं विमलाणं आसि । अस्सच्चिअ सल्लम्मि चन्दमणि-सिला अलम्मि विरएहिं करउड संपिंडिअकप्पूररुक्ख-किसलालणी सरंतसिसिररससोत्तसेअणल्लोहिं असो-अ किसले तल्लविच्चवेम मुणालसच्चएण इमं । (तल्पक-ल्पनानाटितकेन) हला ! उठ्ठेहि, दाहमुम्मुरिअं कमलदलं उज्झिअ सरिअं इह णिक्खिवेहि तणुलहं ।

**जाम्ब**:- (सव्यथम्) किं मक्कवठ्ठेह सरीरपल्लट्टणेहिं । एरिसेहिण समइ इमो संदावो । णवरतस्सेवअ णिवेसकअत्थे मोहया-

मंडवंगणे पराअवसरेण चच्चं विरएह । संमअत्ति तक्केमि ।

**कुमु** :- हला ! भट्टिदारिए ! कहं लक्खिज्जंति पडिक्खणवड्ढंत पराअपंसुलंमि उज्जाणं । मिअ आइपंकअणो अणस्स ।

**जाम्ब**:- (सदैन्यम्) हला ! मन्दभाअएमह महाभाअस्स पाअपंकअ-पराखुमेत्तं विदुल्लहं आसि । का उण असा जीअम्मि ।

**देव** :- निरनुक्रोशहृदय ! हतक ! किं ते नैतावताऽपि पर्याप्तम् ?

**जाम्ब**:- (शनैरुत्तिष्ठति)

**देव**: - (सानुक्रोशरोमांचम् ) अयि! मुग्धे! चन्द्रलेखे ! देहि हस्ता-वलम्बनम् ; (इत्यर्धोक्ते) अहह ! नयनयोरमृताभिषेकः ।

उत्थायालसमुत्तरीयगलनादालक्ष्यवक्षोरुहा
किञ्चिद्विश्लथनीविबन्धनहनव्यासक्तहस्तांचला ।
विस्रस्ते कबरे करं विदधती वीरस्य चेतोभुवः
काचित्कीर्तिविजृम्भणप्रणयिनी विद्या विनिद्रायते ।। १८ ।।

( विलोक्य )

पल्लवशयनाभिमुखी बाला विदधाति पञ्चषपदानि ।
रक्ताम्बुजविपिनं प्रति ललितगतिः काऽपि राजहंसीव ।१९।

**जाम्ब**:- (उपविश्य समन्तादवलोक्य ससन्तापातिशयम्)

किमिणं पल्लवतल्लो हलाअहं एत्थ कित्ति सट्ठचिआ ।
जालीजालकराली मुत्ती मअणाणलंवलं दमोच ।। २० ।।

सहि किं एव्वं काहराहोसि संवेहि अप्पाणं इमेहि मुणा-
लहिअलं करेमि तणुअलअम् । (तथा करोति)

देव :-

सर्वाङ्गसङ्कलितसान्द्रमृणालभूषा
सेयं विभाति शरकाण्डविपाण्डुगात्री ।
स्फूर्जद्विपप्रसरपन्नगपाशबन्धे
बद्धेव पञ्चशरपातकिना मृगाक्षी ॥ २१ ॥

जाम्बः- ([1]सानुसन्धानरोमांचम्; आत्मगतम्) हद्दि किं एदं दीसइ दीसा-
मुहे सुंभसइ समक्खं अइ कूणइ । जं किं पिआणं विअव-.
णिज्जं जाअइ । (प्रकाशं सदैन्यनिर्वेदम्) अयि ! अतक्कणं
सुभओ ।

देवः- हन्त ! किमिदमवस्थान्तरम् ?

अग्रे किञ्चिदिवावलोक्य रभसादानम्य वक्त्राम्बुजं
मन्दस्मेरमपांगरङ्ग[2]विचलत्तारं समुद्वीक्ष्य च ।
आवृत्य स्तनमण्डलं भुजयुगेनाकम्पिताङ्गी क्षणे
तस्मिन्नेव तरङ्गिताश्रुलहरी पूर्णानना खिद्यति ॥ २२ ॥

भवतु, विचार्यासां विधित्सितमवसरे प्रकाशयिष्याम्या-
त्मानम् ।

कुमु :- हला ! किं खणे खणे समुत्तमसि कालकमघडणिज्जो
तुह मणोरहो । ता सहसु संदावं ।





1. सानुबन्धानुरोमांचम्-B.C. 2. विलसत्तारं-C.

**जाम्ब**:- (सनिर्वेदहासम्) अइ उमत्तिए तल्लं पल्लवकपिअंपिकूण एसल्लाण दुल्लकइं चखुदं । सणमेत्त अस्स विपरं सोदुल्लाहो सहसो । सन्तावो महद्दूसहो पडिक्खणं सव्वंगिओ जभए ता किं मामि करेमि हीदि विहिणोकमो । (दैन्यं नाटयति)

**देव**:- हन्त !

बहुविसरणैर्बाष्पाम्भोभिः प्रतिक्षणपातिभिः
कुचशिखरिणौ कुर्वाणेयं सनिर्झरसम्भ्रमौ ।
मदनदहनोद्दाहैर्म्लानिं समेति महत्तरां
मम नयनयोर्माहाभाग्यप्रथानिधिदेवता ॥ २३ ॥

**कुमु**:- (सात्तातंकम्) हला ! चन्दलेहे ! किं करेम ? अम्हे पडिखणं समहिओ होइ सन्दावो सहीए । किहव एक्कससरिअं घसिज्जइ अभिलासो भट्टिदारिआए । दंसणच्चिअदुल्लेहिवट्टइ । पेक्खिओवि देवा अविण्णाद हिअओ किति अब्भत्थीअदि ।

**चन्द्र**:- णवरदस्सणं चिअ तस्स अब्भत्थणिज्जा हिअअं उणमुणिअं गहिरस्स विच्छेआकुला वमीसालिए हि बहुविह दिण्णेक्ख । वणसफ्फलीकअमअण हुअ विक्कमुल्लासेहिं विलासेहिं ।

**जाम्ब**:- (सावधीरणम्) हला ! अलं आसासणवअणो वणो सेहि । असम्भाविअ मिण मक्कहि सो सुहओ कहं अहकम्मअं । ओसहणिज्जोखु इमो बालाहि चन्दमस्स हकारो ।

**चन्द्र** :- सहिण तहच्छत्तेसु । कस्सणे होइ मज्जिदुं अहिलासो अमअं दहत्ति । तुए विपच्चाक्खिअं एव्व णिवत्तिअ वअणा एताहे गमणसमअं मदीहरणी सासमीसालिअं अह्यमग्गदिण्ण णिच्छत्तसबाहलोअणं सेसट्ठाणं । ता तुह हिअअं ठिइणिवेअ मेतच्चिअ मणुरह घणं तुझ । ता तुमं णिम्मेहिणिअआ वच्यासइ अक्कव्विलेहं । तं उण वव-एसेण तं पापेह्म ।

**कुसु** :- सोदाणि कहिं चिट्ठइ ? को वा तस्स समीवं लेहं पावेदि ।

**चन्द्र** :- ( साशंकम् ) हला ! हिरिरिआमिअ मुणिअ हिअअस्स तस्स अतरेणो अवत्थं णिवेदेदुं । अहव परमकारुणिओ खु एसो ।

**देव** :- अयमेवावसरः । (इति सहसोपसृत्य) अयि मुग्धे !

आलोकनात्प्रभृति हन्त सदाऽपि यस्मिन्
वास्तव्यतां भजसि वारिजलोचने त्वम् ।
तच्चेन्न वेत्सि हृदयं वद का गतिर्मे
कामं [1]करोषि करुणाविमुखीं प्रवृत्तिम् ।। २४ ।।

अपि च

मदनदहनाभिभूते मम हृदये विहितसन्निधानायाः ।
अवले तवापि समभूदनुषङ्गादेव हन्त सन्तापः ।। २५ ।।



1. करोति-A.B.C.

**सख्यौ:-** (दृष्ट्वा सानन्दसम्भ्रममुत्थाय) सागाअं अविलम्बिअस्स पिअ-
सहीमणोरहस्स ।

**जाम्ब:-** (विलोक्य सभयानुरागसम्भ्रमानन्दमातमगतम्)

किं माआ किं सिमिणो किं पुरि मोहिअअभावणावसरो ।
जहतहवहवइमभउण जाअंखलु सप्फलं जंअं ॥ २६ ॥

(उत्थातुमिच्छति)

**देव :-** (सानुरोधम्)

अलमलमबले किमिति [1]ग्लपयसि गात्रं शिरीषसुकुमारम् ।
को वा कटाक्षपातनमात्रकृतार्थे जनेऽयमुपचार: ॥ २७ ॥

**चन्द्र :-** ता तल्लध्दं अलंकूणउ महाभाओ ।

**देव :-** (उपविशति)

**जाम्ब:-** ( सलज्जाङ्गसंकोचम्; आत्मगतम् ) अम्हे ! विसमत्तणं वि-
हिणो ।

अदंसणं मीतत्तं पाआए अगोअरीवि का ऊण ।
एहिणउण विद हिअअं भठरी विददेइ सुकअपरिपाअं ॥२८॥

(कातर्यं नाटयति)

**देव :-** (सानन्दमात्मगतम्) हन्त ! कोऽयमानन्दमय: सुकृतपरिपाक-
निष्यन्द: !

---



2. श्रवयति-A.

स्वेदक्लिन्नविपाण्डुगण्डफलकं नीत्वा मुखं [1]नम्रतां
निश्वासोद्गमकम्पिनि स्तनतटे विन्यस्य हस्ताञ्चलम् ।
पर्यस्तेक्षणकान्तिकन्दलझरीपह्मायमानान्तिका
दत्ते कामपि [2]दिष्टवृद्धिमधुना दृष्टेरियं प्रेयसी ।। २९ ।।

कुमु :- (सविनयानन्दम्) महाभाअ ! आवण्णाणुकम्पित्तणं खु सभावो तुह्मारिसाणं ।

चन्द्र :- (आत्मगतम्) अलं कालक्खिवणेण । (प्रकाशम्) वअस्स ! किं बहुणा जप्पिएण ?

अवआरिअ तुझहिअअं गणिअबहुवल्लहत्तणं अ तुए ।
करुणाविमुहेण सही गमिआइ मिआइ मद्दसव्विहिणो ।।३०।।

( सास्रम् )

ता तुमं पुणो पुणो वि एत्तिअं विण्णवेमि । सुज्जोव कमलिणीसुं विरिआसु सव्वद चंचरिओ मादं विसमदाए सअलासुव्वल्लभासु तुए ।

जाम्ब:- (सोल्लासमात्मगतम्) हद्धी ! चन्दलेहा मह हदजीविआसाए किं विअ वअवणिज्जं मंतेदि । विअराणं विणाइ अराविअ कहिं मइलेमि उल्लकमलासणस्स ।

देव :- अयि ! चन्द्रलेखे ! शृणु कथयामि ते भूतार्थम् ।



1. न दूततां-A. दूततां-B.C. 2. दृष्टि-A. दिष्टि-B.C.

परस्सहस्त्रं कामिन्यो भवन्तु मम किं ततः ।
रतिकल्पलता सेयं परमेकैव ते सखी ।। ३१ ।।

आः ! अनभिज्ञे !

सुसंपूर्णशरच्चन्द्रचन्द्रिकाबद्धसौहृदः ।
मुग्धोऽपि कञ्चिदास्वादं चकोरः किन्नु कांक्षति ।। ३२ ।।

**कुमु** :- महाभाअ ! संतोसं अह्म ।

**देवः**- अपि च

यदा तव सखी दृशोरजनि मे सुधासेचनं
तदाप्रभृति मामियं भृशमविश्वसन्मानसा ।
विमुञ्चति दिवानिशं न बहिरन्तरा जाग्रती
कथं नु विषहिष्यते कथय संकथा[1]मन्यया ।। ३३ ।।

**जाम्बः**- (सलज्जानन्दम्) हंदि बणेहि पिअ एसो विवच्चिओ होज पंचसरिसदालिएण ।

**चन्द्र** :- (अपवार्य) कुमुदिणि ववदेसेण अह्मे णिग्गच्चेम्मा अणुहोदु संदावसमणं पिअसही ।

**कुमु** :- तह ।

**चन्द्र** :- (प्रकाशम्) कुमुइणि ! उवठ्ठेहिअदिहिणो अग्घो अंअं उवकम्पेमो । (इति उभे अपक्रमणं रूपयतः)



1. मन्यथा-A.B.C.

**जाम्बः**- (सभयसम्भ्रमम्; अनुच्चैः) हला ! दुवेहिं वि किं गच्छीअदि ?

**चन्द्र** :- (सस्मितम्) किं अम्हेह तुहिं । (इति निष्क्रान्ते)

**जाम्बः**- (सभयकम्पमपसर्पति)

**देव** :- (उपसृत्य सानुनयम्)

सखीवर्गे याते किमिति सहसा ग्लानिमयसे
कटाक्षक्रीतोऽयं जन इह भवत्याः परिजनः ।
विधेयव्याख्यानादयि वितर दाक्षिण्यकणिकां
प्रिये कम्पं मुक्त्वा प्रकटमनुकम्पां विरचय ।। ३४ ।।

तथा हि–

शीर्णां किन्नु समीकरोमि दयिते चूर्णालकानां ततिं
काञ्चीं किं परिवर्तितां विरचये भूयो यथास्थानगाम् ।
कौशेयाञ्चलमादधामि कुचयोः किं कम्पविस्रंसिनं
किं वा ते पदपङ्कजं सललितं संवाहयाम्यादरात् ।। ३५ ।।

**जाम्बः**- (सभयावेगगद्गदं, अनुच्चैः) मा अदिक्लमं करेसु । पिअरपरवस्ससरीराखु अहं ।

**देव** :- प्रिये ! मा मैवम् ।

कामानलपरिष्वङ्गकातरीभूतचेतसोः ।
कामिनोर्गतिरेकैव गान्धर्वविधिरुत्तमा ।। ३६ ।।



अयि ! निष्करुणे !

मदनशरजनितहुतवहकीलाजालेन [1]कवलिते चित्ते ।
जीवेऽपि कण्ठनिर्गमशेषे मदिराक्षि किमिति संशेषे ।। ३७।।

**जाम्बः-** (आत्मगतम्) मङ्गलपाणरक्खाणिमित्तं किह्वएव्व अणुमण्णेमि । (कातर्यं नाटयन्ती अधोमुखं तिष्ठति)

**देवः-** (सानन्दमात्मगतम्)

बलमत्तचित्तभवबाहुपातितै-
र्विशिखै[2]र्विषानलशिखासखैर्मनः ।
व्यथते विशल्यकरणौषधीं परां
वितराङ्कपालिमयि वारिजेक्षणे ।। ३८ ।।

(इत्यालिङ्गनमभिनयति)

**जाम्बः-** (ससाध्वसं नाट्येन परिहरति)

( नेपथ्ये )

अयि ! सारिए ! विसज्जेहि सुअजुआणं । एसा तुमं णेदुं आगआ [3]सिअप्पिआ ।

**जाम्बः-** (श्रुत्वा सभयम्) णाह सण्णवे सहीओ महसंकारणं मज्जिज्ञासिआ समागअत्ति । तुमं लदंतरिदो होहि ।

**देवः -** (सावेगम्) हन्त !

पिबति मधु चञ्चरीको लब्ध्वा नवमञ्जरीं बहोः कालात्
वज्रमयकठिनमनसा वात्यारूपेण विघटितं विधिना ।।३९।।

---

1. कवलित-B. 2. [illegible]-A.B. 3. [illegible]-A. सियायिआ-B. सिथप्पिआ-C.

(लतान्तरितस्तिष्ठति)

(प्रविश्य सह सखीभ्यां मंजूषिका)

**मञ्जूषिका**:- वच्छे ! उठ्ठेहि । किं एव्वं आहरणं वेक्खा चिठ्ठेसि । हक्करेइ महाराअ जम्बवत्ते ।

**जाम्ब**:- तह (इत्यलमुत्थाय परिक्रामन्ती सव्यथमात्मगतम्)

बलमत्तचित्तभवबाहुपातितैः
......धं मुहुत्तंमि हंदि दिव्वोवि ।
णिसिहिअ मिणुज्जत्तं
अणुहोदुं जम्मणं सफलं ।। ४० ।।

**चन्द्र**:- हला ! भट्टिदारिए ! आमन्तेसु तुह हिअअसंदावसमणं माहवीमंडवं ।

**जाम्ब**:- (परिवृत्य)

भसलालिरूइरसो
हिरमावह वलच्छीवि विहारमण्डवअ ।
आमन्तेमि पुणाइए
मे अकुणेसु तावसमणं मे ।। ४१ ।।

(इति प्रणम्य निष्क्रान्ता सहेतराभिः)

**देव** :- (पल्लवशयनमुपेत्य सव्यथम्) हन्त ! गतैव सा गजगामिनी । (लतागृहान्निर्गत्य विलोक्य) हन्त ! परिणतप्रायो दिवसः ।





इदानीं हि

मम मन इव पद्मं ग्लानिमभ्येति कान्ता-
विरहमहमिवायं याति हा चक्रवाकः ।
रविरपरपयोधेरन्तरे रूढरागः
पतति महति मोहे मामकीनो यथात्मा ॥ ४२ ॥

(।सनिर्वेदम्)

पुनः प्रसह्य विशतो मम मानसमन्दिरम् ।
महतो हन्त तापस्य मदतः कञ्चुकीयते ॥ ४३ ॥

किमिहावस्थानेन ?

(इति तिष्क्रान्तास्सर्वे)

## तृतीयोऽङ्कः





1. नास्ति-A.C.

श्रीमत्कृष्णरायमहाराजविरचितं

# जाम्बवतीपरिणयम्

## -- चतुर्थोऽङ्कः --

(ततः प्रविशति कंचुकी)

**कञ्चुकीः**- हन्त! कष्टा खलु राजसेवा; विशेषतो वृद्धकञ्चुकीनाम्। यतः -

प्राप्ताप्राप्तविवेचनं सपटला दृष्टिर्न कर्तुं क्षमा
व्यग्रां कार्यभराद्गतिं न सहते वैक्लव्यमन्दं पदम्।
नो गृह्णाति वचो रहस्समुदितं बाधिर्यबद्धा श्रुति-
र्वाचो नैव विनिस्सरन्ति सहसा वैस्वर्यरुद्धा गलात्॥ १॥

(स्खलितबहुलं परिक्रम्य)

विशेषतोऽद्य मृगयावननिवर्तनक्रमेण द्विगुणितजरावैक्लव्योऽस्मि। (सस्मरणम्) सन्दिष्टोऽहमिदानीं गोविन्देन - भद्रसेन! विज्ञाप्यतां मद्वचनेन आर्यो "मृगयापरिश्रान्ततया अद्य न पारयामि आस्थानगतमार्यमुपस्थातुम्" इति।

(सवितर्कम्) मृगयावननिवर्तनादारभ्य किमप्युत्कण्ठमान इव लक्ष्यते वैकुण्ठः । यतः -

चिरं बाह्यास्थाने न वसति विविक्ते तु रमते
मुहुर्धारागारं व्रजति मुहुरुद्यानमयते ।
परीतः पाण्डिम्ना सितकरकराक्रान्तयमुना-
जलच्छायं कायं वहति कृशभावं [1]च भजते ॥ २ ॥

(सविचिकित्सम्) प्रायः कुचेलवचनचापलपरित्यक्तानुरोधया [2]राधया सह प्रणयकलहः कारणमस्य वैमनस्यस्य । न चेत्कथमसौ परिहरत्यन्तःपुरान्तरप्रवेशमपि ? (पुरोऽवलोक्य) अये ! अयं खलु कुचेलः प्रचलायमान इत एवाभिवर्तते ।

(प्रविश्य निद्राजाड्यमभिनयन् विदूषकः)

**विदूषकः**:- हिओरणीए बलिअस्सत्त विअस्स वअस्सस्स हिअअं वहाविसमद्दहंमिमीणा अत्तेण मए अति । अज्ज विणिद्दाण विद्दाइ । (सनिर्वेदम्) अम्हहे ! किहइ मिअआविवत्ति उत्तरिअ दुवारवदिं आगदेवि विसमविरहविअणा विसूरत्तचित्तस्स वअस्सस्स अणुवट्ठणे हिअअ उव्वेइओम्हि ।

**कञ्चुः**:- (उपसृत्य आस्फाल्य) भोः कुचेल ! किम्निति प्रचलायसे? प्रतिक्षते भवदागमनं देवः ।

**विदू** :- (सावेग्रसम्भ्रमम्) किं उब्बुधो दाणिं पिअवअस्सो ?

---



1. न भजते-A.B.C. 2. नास्ति-A.B.C.

कञ्चुः- का वेला विहितप्राभातिकविधेर्मणिशेखरप्रासादगतस्य देवस्य ?

विदू :- (प्राचीमवलोक्य) णं अज्जवि सुज्जोण समुज्जओ । अहव-पुव्वगिरिकडअवाणरेहि पिक्कडाडिमफलसंकाए वहुक्खिओ होज्ज ।

कञ्चुः- इदानीं खलु विभाता विभीवरी । पश्य

पिपतिषति पतिः कुमुद्वतीना-
मयमवसानगिरेरधित्यकायाम् ।
हरिहयहरिति प्ररोहतीयं
प्रकटजपा सुरुचिः प्रभातसंध्या ॥ ३ ॥

तत्त्वरितं प्रयाहि सविधं देवस्य । अहमपि यथासन्दिष्ट-मनुतिष्ठामि ।

( इति निष्क्रान्तौ )

**मिश्रविष्कम्भः**

( ततः प्रविशति मदनकातर्यं नाटयन् देवः )

देवः :-

ज्वलन्तमपि तन्मुखप्रतिनिधिं सुधादीधितिं
तदीयनयनद्युतिप्रणयि नीलपङ्केरुहम् ।
सरोजमुकुलञ्च तत्कुचकिशोरलक्ष्मीसखं
विलोक्य गमिता मया कथमपि क्षपा तादृशी ॥ ४ ॥

इदानीन्तु

कल्पान्तोत्कटकालकीलवदुरुज्वालाकरालोदयात्
कष्टाहंकृतिकालकूटकुटिला[1]रम्भोपलम्भादपि ।
दृप्यत्कालियतीव्रवेगगरलज्योतिःस्फुलिङ्गोत्करात्
अन्यः कोऽपि सुदुस्सहप्रसरणस्तापः परं जृम्भते ॥ ५ ॥

(प्रतीचीं दृष्ट्वा साश्वासमिव)

पर्यन्तपाण्डुरुचिभस्मभरैः परीतो
निर्वाणवह्निकण[2]भाव्यनिजाङ्कपङ्कः ।
अस्माद्[3]शामहह भाग्यवशादिदानीं
शाम्यत्ययं शशधरात्मकजातवेदाः ॥ ६ ॥

हन्तायमपरमार्थ[4]दृश्वा लोकः ! यतः-

बाडबानलनिधानसम्भवे
कालकूटसहजे [5]कलङ्किनि ।
चन्द्रमाश्शिशिरदीधितिस्सुधा-
भानुरित्यहह नामकल्पना ॥ ७ ॥

( समन्तादवलोक्य सस्मरणनिर्वेदम् )

तदा मञ्जूषिकासमागमनसमये ;

दूरापास्तविलाससहाससुषमा नेत्राम्बु[6]बिन्दूत्करान्
कुर्वाणा गलितान् गतप्रभमुखाम्भोजा मम प्रेयसी ।

---

1. रङ्गोप-A.B.C. 2. [illegible]-A. 3. [illegible]-A
4. दृग्वा-B.C 5. कुटुम्बिनि-B.C. 6. विम्बोत्करान्-B.C.

क्लिश्यत्कैरवकान्तिराकुलगलत्तारावलीविभ्रमा
वीतालोकविभावरीपतिरियं वेलेव सा लक्षिता ॥ ८ ॥

(प्राचीं विलोक्य) उदयितुमभिलषति भगवान् भानुमाली । तथा हि-

कराः कतिचि[1]दब्जिनीप्रणयिनो रथाङ्गप्रिया-
हृदन्तरनिरन्तरप्रसृतशोक[2]शङ्कूच्छिदः ।
पुरन्दरदिगङ्गनापृथुलशैलवक्षोरुहे
[3]लिखन्ति रुचिकुङ्कुमैः किमपि चित्रपत्रावलिम् ॥ ९ ॥

(समान्तादवलोक्य) हन्त ! महोत्सेधः खल्वयं सौधः यत्प्रत्यक्षीक्रियते प्राभातिक[4]पौरवृत्तान्तः । तथा हि-

हेषन्ते तृणवाञ्छया खुरपुटैरुल्लिख्य पृथ्वीं हयाः
कुम्भीन्द्राः कलयन्ति [5]यन्तृसरणौ गम्भीरमालोकनम् ।
निद्राशेषविघूर्णमाननयना निर्यान्ति केलीगृहा-
दाविःस्वेदमुखानुमेयसुरतक्लेशाः कुरङ्गीदृशः ॥ १० ॥

([6]पुरतो विलोक्य) हन्त ! जृम्भणं मौढ्यस्य । यदियम्-

[7]मृष्टकुसुमोपहारा पुनरपि मार्जयति मणिभुवं मुग्धा ।
निजनयनप्रतिफलनप्रभूतपर्यस्तकमलदलशङ्का ॥ ११ ॥

(अन्यतो दृष्ट्वा) हन्त ! इयम्-

---

1. दब्धिनी-B. दचिनि-A. 2. शंकुच्छिदम्-A. 3. लिखितन्ति-A.
4. [illegible]-B.C. 5. [illegible]-A.B.C. 6. पुरतोऽवलोक्य-A.
7. दृष्ट-A.B.C.

यावन्मोहनसदनान्निर्गत्य पुनर्निवर्तिता सुमुखी ।
तावदयं शयनीयादुत्थाय द्वारमुपगतः कान्तः ।। १२ ।।

अहो नु खलु भोः !

परस्परानुरागो हि प्रथमं मङ्गलं रतेः ।
शृङ्गं शृङ्गारशैलस्य प्राणाः प्रसवधन्वनः ।। १३ ।।

तथा हि-

वासन्तीसदनजुषो मम प्रियाया
रागार्द्रं निशमयतो वचस्तदानीम् ।
आनन्दामृतलहरी हृदि प्रभूता
या तस्या न च परिरम्भणं समानम् ।। १४ ।।

(अनुभाव्य [1]सनिर्वेदातिशयम्)

अविरलपरितापक्लेशितैरङ्गहारै-
स्सरसिजदलशय्यां सा परिम्लापयन्ती ।
अजनि विषविसर्पैराकुलत्वं दधाना
रजनिरमणरेखा राहुणेवार्धमुक्ता ।। १५ ।।

हन्त ! इदानीमाकस्मिकसन्निधानमालोक्य मामन्यादृशी खलु सा संवृत्ता । (सरोमांचम्)

लज्जासङ्कुचदङ्गकं समुदयत्कम्पं चलत्कुन्तलं
निस्सीमश्रमवारिनर्तितकुचं निश्वाससंरोधनात् ।



1. सनिर्वेदम्-B.C.

[1]कर्णान्तःप्लवमानतारमनतिस्पन्दाभिरामाधरं
प्रत्यक्षीभवतीव पद्मजनुषः पाण्डित्यपारायणम् ।। १६ ।।

हन्त ! निष्कारणाकरुणो हि विधिहतकः । यदनेन-

आनन्दामृतवाहिनीं नयनयोरद्वैतनिश्श्रेयसं
सर्वस्वं प्रणयस्य रागमहतः प्रेम्णो गरीयः पदम् ।
लावण्यं स्मरवीरपानमलसैराबिभ्रतीमङ्गकै-
स्तां द्रष्टुं तरलेक्षणां क्षणमहो न क्षान्तमेवं [2]तदा ।। १७ ।।

(सनिर्वेदम्) हन्त ! किमित्यकारणमाहूतोऽहमार्येण ।

अथ वा

व्यसनाद्विनिवर्तयितुं हितमिति कृतवानिदं मम व्याजात् ।
जानाति नैवमहह स्मरशरपरितापमपरिमेयं मे ।। १८ ।।

(विचिन्त्य सानन्दम्) साकल्येन साफल्यमस्य जन्मनः केवलमे-
तावता । यदुत-

आपातघोरतर[3]धामकरावमृष्ट-
प्रम्लानचम्पकनवप्रसवाभिरामम् ।
अङ्गं तदेकमपि वारमनङ्गतप्तै-
रालिङ्गितं समजनि प्रसभं ममाङ्गैः ।। १९ ।।

(सोल्लासम्)

---



1. कण्ठान्तः-B.C. 2. तया-A.B.C. 3. यामं-B.

अनङ्गनृपसा(म्राज्यश्रीर्न[1]वो)ढासमागमः ।
प्रतिषेधोऽपि यत्रत्यः परमानन्दकारणम् ।। २० ।।

तथा हि

मुखाम्बुरुहचुम्बने यदपवर्तयत्याननं
तनोति परिरम्भणे तरल(हस्तसंछादनम् ) ।
[2]कुचग्रहणकौतुके नमयते वपुर्वल्लरी–
मिदं रतिलताफलं मदनतात्त्विका मन्वते ।। २१ ।।

(सखेदानुतापम्)

अंसावर्ति विनर्तितभ्रु वदनं [3]भूयो (ऽपि नो चुम्बितं)
द्वन्द्वं तत्कुचयोस्सवेपथु पुनर्नास्फालितं लीलया ।
काञ्चीदामपदे करोऽपि रभसाद्व्यापारितो नासकृत्
[4]किञ्चारात्किलिकिञ्चि( ताञ्चितवपुर्मुग्धाऽपि ) ना-
लिङ्गिता ।। २२ ।।

(सनिर्वेदातिशयम्)

यावत्प्रसाद्य बहुधा पुनराननेन्दु–
मस्याः पिपासुरधरामृतमुत्क्षिपामि ।
[5]तावच्च कर्णकुशलं (प्रणुन्नभून्मे)
(मञ्जूषि)कागमनसूचनवज्रपातः ।। २३ ।।

हन्त ! हन्त ! !

---

1. रोढ्वा-B. रोढा-A. 2. कच-B.C. 3. भये-B.

4. किचाना-A.B.C. 5. तावच्चु-A. तावत्तु-B.

मञ्जूषिकागमनसूचनसंविधाने
सा मामुदीक्ष्य सरलाश्रुभिरक्षिपातैः ।
मन्दं यदाह लतिकान्तरितो भवेति
तन्मर्मणि स्पृशति हन्त किमाचरामि ॥ २४ ॥

हन्त ! कष्टा परतन्त्रता । येनैवमार्यो निमेषमात्रमपि ममात्र न वासमनुमनुते । तन्न सेत्स्यत्येव कमलासनकौशलाहंकारप्रतिफलनमणिदर्पणस्य दर्शनमम्बुजविडम्बिनो जाम्बवतीवदनचन्द्रस्य । सर्वथेदानीम्—

प्रविशतु मम चेतो निर्विचारं विकारं
परिदहतु च देहं कोऽपि दाहप्रवाहः ।
प्रहरतु विषमास्त्र[1]श्शातकोणैः स्वबाणैः
प्रसरतु परिमाथी निष्प्रमाथो विषादः ॥ २५ ॥

(नेपथ्ये वैतालिकौ)

"[2]जय जय देव दया( मृत )कालमेघ! पादारविन्दमकरन्दायमानमन्दाकिनीप्रवाह ! प्रपदपाटवविपाटितशकट ! कालियफणरङ्गनटनमृदङ्गनादायमानयमुनाकल्लोलकोलाहल ! रभसोन्मूलितपारिजातकिसलयावतंसप्रत्यक्षितसत्यभामानुराग ! योगिजनमानसान्तराल(मराल)! करुणालताकन्द! गोविन्द ! भवतु सुखाय भवतो विभातसमयः ।

**प्रथम** :- सम्प्रति हि



1. श्शान्त-A.B.C. 2. जय देव दाया-A.C. जयतु जयतु देव दाया-B.

कृत्वा कुञ्चितजानु पादयुगलं प्रोथोपवल्गत्खुरं
पूर्वं कायमुदस्य पुंखिततरं सर्वाभि[1]सारक्रमाः ।
रथ्याः काश्यपिगाढ[2]कृष्टकविका[3]बन्धा रथं भास्वतः
शृङ्गात्प्राथमिका[4]चलस्य रभसाकृष्टं समुद्युंजते ॥ २६ ॥

द्वितीयः-

पुरन्दरहरिल्लतास्फुरितपल्लवोल्लासिनः
प्ररूढतिमिराटवीपटलदाववह्नित्विषः ।
स्फुरन्ति वियदम्वुधिप्रकटविद्रुमाडम्बराः
कराः किरणमालिनः कनकपङ्ककल्पोदयाः ॥ २७ ॥

देवः - (आकर्ण्य प्राचीमवलोक्य) हन्त ! इदमुदितभूयिष्ठं ब्रिम्बमम्बरमणेः । कथमद्यापि विलम्बते वयस्यः ?

भ्रातरस्तनयास्सम्पत्संविभागपरायणाः ।
संविभक्ता हि दुःखानां हृदयालुस्सुदुर्लभः ॥ २८ ॥

(प्रविश्य विदूषकः)

विदू :- (विलोक्य) अम्हे ! एस वअस्सो सउहारोहणमङ्गदिण्णदिठ्ठी छद्दइ । मणेमि एव्व वडिपालेइ । (विभाव्य) हिद्दि अण्णारिसो वअस्सस्स सरीरसण्णिवेसो ।

डरमुक्क[5]सलिलजलहरखबुरा कंकीकिसाइ अंगाइं ।
ओसाअवरिसमीसालिअ सररुहसरसिरि दिठ्ठी ॥ २९ ॥

---

1. सारा-B.C. 2. तुष्ट-A 3. कथो-B 4. [illegible]-A.B.C.
5. सलिजलजलहर-A.B.C.

अम्हो! किं एदं पेक्खिअ णिल्लखच्चिअकम्पिअ सहीसो-[1]मुअं मुहं भसिइ। हावहइ तक्खणं चिअबाहं पवुहुं खिअं-दिठ्ठ।

देव :- हन्त! किं तदिदम्?

स्मितकुसुमिताधरदलं वदनं वलमानलोचनं दधती।
स्फुरति पुरो विशति पुनश्चेतो विद्युदिव जलधरं तन्वी।३०।

विदू :- (सशंकम्) अअं सेणचित्तोवअरणाण अणणिमित्तं पेसिदाए महुराए खणसल्लावेण गआ कालकला। किं वअस्सो भणिस्सदि? (विचिन्त्य) होदु एव्वं दाव। (उपसृत्य) सोद्धि होदे- (इत्यर्धोक्ते श्रमं नाटयति)

देव :- (विलोक्य) सखे! किमिदमियतीं वेलां [2]विलम्बितवानसि? किमिदं श्रमवशविसंस्थुलनिश्वासनिर्भरमति[3]गद्गदवचनं च ते वदनम्?

विदू :- वअस्स! उपविसिओ णादपरिस्समो भणामि। (तथा कृत्वा) वअस्स! सोद्धोम्हि ता कहेमि। ताहे गहाएरन्तीए तारिससंदावस्स तुहणे अविहसिस्सिरो वआरसंविहाणपराहीणत्तणेण। पलाअणिद्दोच्चिअ ठिओह्मि। तदो अरणत्तचरणा उहणिउरुंबरणिअसूइएं विहावरीविरामे विह्नारिअ आअदाए णिद्दाए विअणि मिल्लिअलोअणं मोक्कण तुमं पलाइदोह्मि।

---



1. मुह-A. 2. विलम्ब्य स्थितवानसि-B. 3. गद्गद वचन-B.C.

**देव** :- (सनिर्वेदम्) अये ! किं ममापि निद्रा नाम ?

स्वप्ने मम समाशङ्क्य विधिस्तस्यास्समागमम् ।
एकान्तकुटिलो नैव निद्रामपि नियच्छति ।। ३१ ।।

[1]ततस्ततः ।

**विदू** :- तदो अघरं गदुअ दक्खिअबह्मणी मुहुत्त क्खणच्चिअपडिणिअत्तिअ तुरिअं आअच्चिअ मणिसेहरप्पासाअं समाओह्मि। तदो अपसिदुदिलत्तणेण मिअआवणणिवत्तणसमेण सतविअं स्तुह अणुवट्टणमुक्का ह्मनत्तणेण असमहिअदोक्खेबेल्लो रूठहतुरअखुररोसाणि असिहरस्स इमस्स सोहस्स आरोहणे पडिसेवाणप्पडिअपडिअ उट्ठिअ उट्ठिअ तालरूक्खारोहिजरितबाणरोचि अणस्स संतोरिअहविइह समागओह्मि । तेण कालाईआआओ परिस्समोवि संवुत्तो ।

**देव** :- हन्त ! कौशलं वयस्यस्य ।

**विदू** :- वअस्स ! तारिसविवंत्ति संपादइत्ति आगआ हुरत्तिआ ।

**देव** :- ततः किम् ?

**विदू** :- दाणि किञ्चि सज्जं करिअ संदवं अप्पाविणो दीअदु ।

**देव** :- वयस्य !

कठोरकामसन्तापकबलीकृतचेतसाम् ।
[2]या या कालागता सैव श्रेयसी न तु भामिनी ।। ३२ ।।

---



1. ततः-B.C. 2. पया-A. याया-C.

[1]इदानीं हि

जगदिदमखिलं मे शून्यमाभाति दूरं
दहति वपुरमेयो दारुणः कोऽपि तापः ।
ज्वलति दहति मुह्यत्याकुलत्वं प्रयाति
कबलितमिव चेतः कालकूटानलेन ।। ३३ ।।

**विदू** :- (आत्मगतम्) किं कुणिमि पुणाइ पुण विवड्ढुतुद्दामसंदाववइ अरणिं वडिअ विसमवअणावेअ तरंगिअतरंगो वअस्सो होइ । ता कहं अतरेहि इमं दसं । होदु तवकेरेचिअआलावं पत्थावेमि । (प्रकाशम्) वअस्स !

अणुहुदंहु एक्कवारिजहिच्छं मणरहफलं ।
अच्चेरी खु इमं तुमं पुव्वभहिअं संदावं उव्वहसि ।। ३४ ।।

**देव** :- अरे ! त्वमनभिज्ञोऽसि रतिसमयसंप्रदायस्य; यत्परस्परानुरागज्ञानं नाम प्रकृष्टेन्धनप्रक्षेपः कुसुमचापतापानलस्य । तत्रापि

सङ्गमानन्तरं भूयो विप्रयोगो भवेद्यदि ।
विषमायुधशस्त्राणामिदं हि विषलेपनम् ।। ३५ ।।

**विदू** :- अह्मो ! अच्चेरि खु इदं अणुभूदं सव्वं सुहं विम्हरिअ अणुहोज्जत्तदुहभइओ विअला खिज्जइ वअस्सो ।

**देव** :- एतादृशी खलु संसारिणां वृत्तिः ।

---



1. नास्ति-C.

अनुभूय सुखमनेहस—
मखिलं यदि भवति दुःखमेकस्मिन् ।
दिवसे तदेव जन्मनि
सकलेऽप्यनुभूतमिव भवेज्जन्तोः ॥ ३६ ॥

**विदू** :- सच्छं इदं जं दुव्वारच्छुहा जंतिउ अकेइ अणण्णस्स मुहं विणदक्खिअं विअ पडिभाइ ।

**देव** :- किं करोमि ? तस्या दर्शनमन्तरेण न शक्यते प्राणान् धारयितुम् ।

(पर्याकुलत्वं नाटयति)

**विदू** :- (सव्यथमात्मगतम्) छित्तफलअं आणेदुं गआ महुरा चिराअइ ।

(प्रविश्य मधुरा)

**मधुरा**:- एस भट्टा कुएलेण सह पंकजाउलो वट्टइ । (उपसर्पति)

**देव** :- (सोल्लासमक्षिणी निमील्य)

आगत्याननमानतं विदधती हासावलिप्ताधरं
मन्दं मामवलोक्य मन्मथशरप्रख्यैरपाङ्गाञ्चलैः ।
आलक्ष्यस्तनमाकुलं करतलेनाबध्नती कैशिकं
व्रीलाविह्वलिता व्यवस्यति पुनर्यातुं मम प्रेयसी ॥ ३७ ॥

**विदू** :- (आत्मगतम्) हद्दि पुणोवि गहिओ एस भावणावाहिणा ।
(विलोक्य, प्रकाशम्) वअस्स ! एसा महुरा ।

**देव :-** (अश्रवणनाटितकेन)

जनमेनं विलोक्यापि त्वदेकशरणाशयम् ।
दया दवीयसीव त्वं दयिते कुत्र गच्छसि ॥ ३८ ॥

**मधुराः-** (आत्मगतम्) अह्मो ! सण्णिहिदंवि मं ण पेक्खदि भट्टा । एव्वं दाय भट्टाइचित्तोपअरणं ।

**देव :-** (विलोक्य) मधुरे ! किमानीतं चित्रभाण्डम् ?

**मधुराः-** [1]भट्टा ! एदं (उपनयति)

**विदू :-** वअस्स ! किं णेण ?

**देव :-** सखे !

भावना मनसस्स्वप्ने सङ्गतिश्चित्रलेखनम् ।
कामिनां कामदग्धानां कान्तापर्यायदर्शनम् ॥ ३९ ॥

किन्त्वनिर्वाह्य इवायमुद्योगः; यतः-

एतादृशमिति सम्यग्विभाव्य मनसा विलेखनीयं हि ।
न भवति तस्या रूपं ग्राह्यं मनसां शतेनाऽपि ॥ ४० ॥

तिष्ठतु तावत् ।

प्रकृतिकुटिलं [2]नैल्यं पारिप्लवा च विशालता
मधुरमधुरो रागः काठिन्यमुन्नतपीवरम् ।

---

1. भट्टा एव्व (उवणअदि)-B. भट्टा एव्व (उपनयति)-C. 2. नैव-B. नैवं-C.

अनृतमलसं गाढाभोगश्च गौरवडम्बरो
मृदुररुणिमेत्येवंभावः कथं नु विलिख्यते ।। ४१ ।।

किञ्च

पादश्चोत्किरतीव पल्लवचयान् प्रायो रणन्मेखला
श्रोणिर्मध्यकथैव का प्रतिपदप्रारब्धवृध्दी कुचौ ।
लीलालोलविलोकनञ्च बदनं लावण्यपूरैर्नवै–
रङ्गं तच्च तरङ्गितं कथय [1]मे किं किं कथं लिख्यते ।।४२।।

विदू :- किमए सव्वहालेहि दव्वत्ति मणिबन्धीअसि ।

मधुराः- अइ अण्णभिण्णुअण इमो ओसए परिहासस्स ।

देवः - अथ वा

अम्भोजतूणकदलीपुलिनालिमाला–
चक्राह्वदामसितदीधितिशैवलानि ।
चित्ते विधाय विलिखामि यथाकथञ्चित्
तद्भावमात्रमपि किन्नु भवेन्न नाम ।। ४३ ।।

मधुराः- (आत्मगतम्; आकाशे लक्ष्यं बद्ध्वा) जब्बव तुमच्चिअ तिभुवणम्मि चूडामणि विलआणि । जं अमररमणी अण सग्गाहविमुहं भट्टिणो हिअअं एव्वं अढ्ढिअं तमए ।

विदू :- केण णणंज तुह चित्तणे उणअं ।

---



1. रे-B.C.

**देव :-** (लेखनमभिनयन् सनिर्वेदम्)

जनयन्नेत्रयोर्बाष्प[1]मापः कन्दलयन् करे ।
[2]नैतावदपि मे हन्त सहते हतको विधिः ।। ४४ ।।

(यथाकथंचिल्लिखति)

**मधुरा:-** (दृष्ट्वा) सरिसक्ख भट्टिणो संदावं सइव वेहवस्सअ ।

**देव :-** (निर्वर्ण्य)

सौन्दर्यसारमन्दिरमङ्गं तदगाध(रूप)लावण्यम् ।
अहहा लेखाजालै[3]राविष्कृतमतिसुदूरमविचारात् ।। ४५ ।।

(प्रत्यक्षलक्ष्यं बद्ध्वा)

वक्त्रं किञ्चिदुदञ्चय प्रियतमे वाचंयमत्वं जहि
त्यक्त्वा भीतिमितो निधेहि तरलप्रायानपांगाञ्चलान् ।
चक्षुर्जीवतु चन्द्रदग्धमयतां मोदं श्रवः कोकिला–
लापत्रस्तमनङ्गसायकशिखाखिन्नं मनो मोदताम् ।। ४६ ।।

अयि ! निरनुक्रोशे ! भृशं [4]निष्ठुरासि । किमद्याप्युपेक्षसे?

विना विलम्बेन विहाय लज्जां
मृणालनालीमसृणेन दोष्णा ।
विहातुकामन् विनिवारय त्वं
कण्ठोपकण्ठस्खलितानसून् मे ।। ४७ ।।

---

1. [illegible]-C. 2. एतावदपि-A.B.C. 3. राक्तं दूर-A राक्तं दूर-B.C. 4. निष्ठासि-A.B.C.

**मधुरा**:- (सविस्मयम्) अह्मो ! भट्टावि एव्वं कवट्टीअ इमाए एव्वं महस्स ।

**देव** :- ([1]ससान्त्वनम्)

बहुशो भावनावेशैर्यातायातविधायिनौ ।
खिन्नौ ते चरणौ तन्वि किन्नु संवाहयाम्यहम् ॥ ४८ ॥

**विदू** :- (सहासम्) अंह्मो ! दासीए पुत्तिआए भावणाए महिमाजं चित्तमेत्तण वअस्सो वच्चीअदि ।

**देव** :- मूर्ख ! धिक् ते पौरोभाग्यम् । विधिरिव त्वमपि प्रातिकूल्यमवलम्बितवानसि ।

**विदू** :- (आत्मगतम्) कहं अक्खिवामि ।

([2]नेपथ्यार्धप्रविष्टा प्रतीहारी)

**प्रतीहारी**:-भट्टा ! पडिहारम्मि किण्णरमिहुणं महइ सामिणोदंसणं भणइ । अमिअ आवण परिइदा अह्मेत्ति ।

**देव** :- (आत्मगतम्)किम् ? कथं किन्नरमिथुनं नाम ?

अपि [3]मणिकण्ठो भवेत् ? यो मत्प्रसङ्गेन चन्द्ररेखागृहीताभिधानः । भवतु द्रक्ष्यते । (प्रकाशम्) अविलम्बितं प्रवेशय ।

---

1. [illegible]-B. 2. [illegible]-A. [illegible]-B.C.
3. मणिाकर्णो-A.

**प्रतीहारी:-** (निष्क्रम्य किन्नरमिथुनेन सह प्रविशति)

**देव :-** मधुरे ! गृहाण चित्रफलकम् । त्वमपि द्वारे सावधाना तिष्ठ ।

**मधुरा:-** जं भट्टा आणवेदि ।

(निष्क्रान्ता)

**प्रतीहारी:-** इदो इदो ।

**मणिकण्ठ:-** प्रिये ! रत्नकलिके ! विलोकय राजकुले विलसितमाश्चर्याणाम् ।

मायायामवतीः सृजन्ति बहुशो माहेन्द्ररत्नप्रभाः
शोणाश्मद्युतिरातनोति कुहनासंध्यासमुज्जृम्भणम् ।
मिथ्यातारकजालकं कलयते मुक्तामणीनां चयः
सान्द्रामादधते सुधांशुदृषदां भासो मृषाचन्द्रिकाम् ॥ ४९ ॥

**रत्नकलिका:-** णाह ! पेक्खामि अइसइअं अइसरिअं जाअवेसरस्स ।

**प्रती :-** एस मणिसेअरं पसादो आरोहिअदु । एस भट्टा उपसप्पीअदु ।

(निष्क्रान्ता)



**मणि :-** (उपसर्पन् विलोक्य सानन्दम्) प्रिये ! पश्य पश्य ।

महोभिरतिभास्करैरपि दृशोस्समापादयन्
सुधालहरिसेचनं सरसवारिद[1]श्यामलः ।
वहन्निव शरीरितां [2]नवनवो रसः कौतुकात्
पुरो भवति गोपिकानयनपूर्णपात्रं हरिः ॥ ५० ॥

**रत्न** :- (विलोक्य) डो एस भट्टिदारिआ णअणानंदो । णाह! जुत्तं खु इमस्स किदे भट्टिदारिअ तह संवुत्तोत्ति ।

**मणि** :- (विभाव्य) हन्त! किमेतत् ?

प्रत्यङ्गमङ्कूरितपाण्डु[3]भावं
वपुर्वहन् वारिजलोचनोऽयम् ।
प्रजागर[4]क्लान्तदृशा मुखेन
पर्युत्सुकत्वं प्रकटीकरोति ॥ ५१ ॥

**रत्न** :- किअण्णं भट्टिदारिआ पुण्णपरिणामो एसा ?

(उभौ उपसृत्य प्रणम्य)

जय कुसुमबाणसम्भवकारण करुणाविलास रमणीय ।
नारायण वररमणीसमूहसम्मोहकरणपारीण ॥ ५२ ॥

**देव** :- (सस्मितम्) इत उपविश्यताम् ।

(उभावुपविशतः)

**देव** :- कुतो भवन्तौ ? किं नामधेयौ च ?

---

1. [illegible]-A.B.C. 2. [illegible]-A. [illegible]-B.C.
3. भावः-B.C. 4. त्यान्त-A.

**मणि** :- (साकूतं विदूषकमवलोकते)

**देव** :- न शङ्कनीयमपरमिदं मे हृदयम् ।

**विदू** :- (सगर्वम्) राआमच्चो अहं । मोकूणसक्कं भण ।

**मणि** :- (सस्मितम्) अवधारयतु देवः । आवामाशैशवादाकलित-पोषणौ भर्तृदारिकया जाम्बवत्या [1]क्रीडागिरिनितम्बकृता-वसथौ [2]सर्वविस्रम्भस्थानतां च नीतौ ।

**देव** :- (सानन्दमात्मगतम्) हृदय फलित[3]वितर्कमसि । (सभयाशंकम्) किमिति तत्प्रवृत्तिमसौ वक्ष्यतीति वेपते चेतः । (प्रकाशम्) किन्नर[4]जातिर्हि गन्धर्वोपनिषदां नियमस्थानम् ।

**विदू** :- किं एत्थ आअमकालणं अंअकमसो सुणाहि ।

**मणि** :- देव ! इयन्तु रत्नकलिका कुमुदिनीचन्द्ररेखयोरन्यतरेति विदितं भवतु देवस्य ।

**देव** :- अपि किं त्वं मणिकण्ठः ?

**मणि** :- [5]अथ किम् ।

**देव** :- ततश्च ।

**मणि** :- भर्तृदारिकायाः किमप्यत्याहितमाशङ्कमानया चन्द्ररेखया समाहूयानुरहसमेवमभिहितोऽस्मि– "मणिकण्ठ! वि-

---

1. क्रीडाभिरितिनितम्ब-A. क्रीडाभिरनितम्ब-B.C. 2. विसृम्भ-A. विस्रम्भ-C. 3. वितर्कासि-B.C. 4. जातिभिः-A 5. देव ! अथ किम्-A.

दितमेव [1]ते दशान्तरं भर्तृदारिकायाः तद्विलम्बं विहाय विहायसा द्वारकामासाद्य विदितवृत्तान्तं विधेहि यादवाधीशम् । इयञ्च भर्तृदारिकासन्तापसाक्षिणी रत्नकलिकाऽपि यातु भवता सह" इति ।

**देव** :- (अपवार्य) अत्याहितमिति वज्राहतमिव हृदयम् ।

**विदू** :- किं एत्थ ? अच्चाहिदि । तुमं विअ तंवि संदावो वाहेइ ।

**देव** :- प्रकाशम्) मणिकण्ठ ! त्वमभिज्ञोऽसि सकलवृत्तान्तस्य । मन्निर्गमनानन्तरोदन्तं वर्ण्यमानं श्रोतुमिच्छामि ।

**रत्न** :- भट्टा ! अहं विण्णवेमि । ओहारेहि तदो मज्जसिआए सहवच्चंती पए पए खलन्ती बहलबाहप्पसरं निअद्दिस्सेहिण मुहम्मि सदइणं णक्खिवत्ती विलपविसिअवई । तदो असभि किं एव्वं सन्तवसि पडिदिअहम्मिअ आवाएण पुणो तुह हिअअपल्लहस्सदंसणं होसिदित्ति सहीहि आसासिआइ सइअइ सिसिअव आरबिअणिअसंदावारअणिगमिअवइ ।

**देवः**- (साशंकम्) ततस्ततः ।

**रत्न** :- विरलतक्कुरुलालकरिअम्मिचिअदिअहलच्छीमुहम्मि सहहीअणा णिग्गच्चिअ विलादो अलसणी सहेहि । अग्गेहितं सिअ माहवीमण्डवम्मि पल्लवत्तले णिवसिअ तणुलअं तुह्मा अमअणा सा विह्मरिअसंदावा सही कहिं जीजंती तुह्म केरच्चिअ वुत्तंतं पुलइअकपोलं सुणीति मोसच्चि अपअस्स



1. नास्ति-B.C.

दट्टिण अण्णाठिअवई । जहजहअइंकमइ तुह्माण आअमण-वेला तहतह विसविसप्पेण वकेण विअ मणविअणावेणण दूमाविअ सही अणाचरमसिअलासिहर पल्लत्ति गहत्थिम्मि गहवइम्मि चक्काइंव संदावमइ आओरध्दोर बाह बाहं एव बह्मसिअ पण्डरभीडपण्डला लज्जातरलिअं विसाअमलिअं संदावणीसहं दइण्ण सुण्णम्मि सहीमुहेसुवारं वाचोरंती ताहं भट्टिदारिआए किए एव्वं विहासिअ णइक्कम्मणि-ज्जरज्जसहस्स गुरुअं खुराइत्तणं तारिसाणुराओ ससम्मा-णभावो विण्णाअ तुहमहिआओ ओसो सप्पहासुवो समाग-मिस्सइत्ति भणिआ गलत्तबाहप्पवह विसंवदिअपसरंमि विणिव्वेअहासं उत्तरीअकरिअणीसहदाए सणिअसणिअ मणिअम्मणिअं मणिअं वच्चंती बिलंतर पविसिअई । भट्टा तीएरअणिए जं अवत्थं जीविअ।रंछविअणज्जं संदावं जाणिवेरिअं भट्टिदारिअअ भवदी तं एव्वत्ति वउराणणो विवण्णि उण्णपहुप्पइ ।

देव :- (सकरुणनिर्वेदम्)

अनतिचिरविकचपेशल-
शिरीषसुकुमारमङ्गमबलायाः ।
कथमिव सहेत तापं
करुणाविमुखो हि कामचण्डालः ॥ ५३ ॥



ततस्ततः ।

रत्न :- तहच्चिअ पहादम्मि णिग्गच्छिअ सम्मि माहवमण्डवंमि तुह पडिपालिआ अमणासहंहि बहसंदाबमई एव्वं ठिअई। तदो अदिक्कमत्तंमि महाहाअस्स सण्णिहाणसमअंमि किं वि सस्सणिज्जं दसत्तरं ओलोइअहिं[1]आदिह दिनेंहिं या चन्दलेहा अग्गदो एव्व भट्टिदारिआए। (अंगुल्या मणिकण्ठं निर्दिश्य) इमं हंकारिअ झंतिणहमंगेण भकुण भट्टिदारिआ-संदावस्स सेणाणिवेसंगणं विसारिअ झंति णिवत्तेह्नि मिअ आए णिग्गमिस्स इवाणवा महाभाओत्ति परिअवई।

देव :- (साशंकम्) कथय मणिकण्ठ! त्वदाचरितम्।

मणि :- देव! विज्ञापयामि। ततो मया क्षणेन विहायसाऽऽगत्य शून्यसेनानिवेशस्थानदर्शनविदीर्णहृदयेन अश्रावि सञ्च-रिणो विरलाज्जनात्।

विदू :- वअस्स! को तुहि एक्को वाणवर तुहहि अअं मोत्तण सव्वेपि अहमहमिआ एण अरगमण संतोसेण अगदो चलिआ।

देव :- भवतु ज्ञास्यते; मणिकण्ठ! किमिति श्रुतं भवता?

मणि :- "अद्यैव बलदेवस्य शासनादरिशासनः।
सेनया सहितो वेगाद्देवो द्वारवतीं गतः" ॥ ५४ ॥

इति। श्रुत्वा च नितरां दूनहृदयः प्रतिनिवृत्त्य अहं अधि-माधवीगृहं आकाशदत्तोत्सुकलोचनामुन्मुखीं ससखीं भर्तृदा-



1. या हिअ दिणेहंधा-A. यहिअदिणेहिं या-B. था दिणेहिं-C.

रिकामालोक्य किमिति कथयामीति जातनिर्वेद एव अम्बरादवातरम् । अवतीर्णं च मामस्तमितमुखरागमालोक्य किमद्यापि मृगयायै न निर्गमिष्यतीति चन्द्ररेखयाऽभिहितम् । ततस्संदिहानमालोक्य मामविरलबाष्पप्रवाहोद्गारगद्गदया गिरा शापितोऽसि मम जीवितेनेति भर्तृदारिका निर्बन्धितवती । ततः श्रुतदेवनगरगमनवृत्तान्ता च झटिति वज्रहतेव वल्ली मोहमुपगता ।

देव :- हा ! किं करोमि ? संशयितजन्मसाफल्योऽस्मि । (मोहमुपगच्छति)

विदू :- (सहसा धारयन्) वअस्स ! समस्ससिहि समस्ससिहि । (चेलांचलेन वीजयति)

मणि :- (अपवार्य) प्रिये ! [1]अप्येवं फलितमेव भर्तृदारिकामनोरथतरुणा ? (प्रकाशम्) देव ! धैर्यमवलम्ब्यताम् ।

देव :- (समाश्वस्य) मणिकण्ठ ! ततः किं प्रतिपन्नम् ?

मणि :- ततश्च सरभससखीजनप्रत्यापन्नचेतना;

निर्लक्षं दिशती दिशासु नितरां दीनावतारां दृशं
तूष्णीम्भावमुपागता च सुचिरं ध्यात्वेव यत्किंचन ।
मूर्ध्नश्चालनमाकलय्य नखरैरालिख्य [2]भागं भुवो
बाला पङ्किलयांचकार वसुधां बाष्पप्रवाहोद्गमैः ।। ५५ ।।

---



1. अप्येवमित्ति-A. मय्यवसिति-B.C. 2. भाव-A.B.C.

देव :-

कठिन इति किमपि करुणाविहीन इति सहृदयो नेति ।
कथमेवं कृतवानिति विविधं मनसा विचारयेदबला ॥५६॥

विदू :- खणं मोक्कूण परिदेवणं सुणसुतीए उत्तत्तं । तदो तदो ।

रत्न :- तदो अतहंणि विण्णदठ्ठूण भट्टिदारिअ झत्ति धरधरा-अत्तहिअअ पलहय्यहत्थसणिअं साणुणअं कुमुइणी चन्दलेहाअ भट्टिदारिअं भणिदवदीओ । हला ! किं एव्वं काअरत्तणं उव्वहसि मुअ सुखे हुरिअं सुणिअं तुएविअं अस्स सासणाओ गओत्ति पराहीणंतणं खु सुहं पडिबंधो कि तुमंणआ जाणासि तस्स तारिसं तुह विरहभीरुदं ताअइरेणच्चिअकेणं विवाएणपडिणिवत्तिस्सिदि मोक्कूण मोरउक्खा दुहवेअस्सट्टावे हिअत्ति । तदो अबहलबाहप्पसरारुण एदिठ्ठीए पच्चलं मअणाणलंविअ उग्गिरंती हला ! अज्जवि आसामहजीविअंमि तुह्माणं तिणवर फणिअणिव्वेदहासधूसरिआ हरदला किह किह विगमिअ दिअहसेडविलं एव्व पविस आवई । अदो आरहिअह्म भट्टिदारिआ अण्णारिसंदावा अण्णारिसवावारा अणारिसहिअअठ्ठिई झुण्णासि सुव्वेआ अण्णारिसुव्वेआ अण्णारिसणिव्वेआ वट्टई ।
(संस्कृतमाश्रित्य)

कर्पूरद्रुमबालपल्लवचयः कल्कीकृतो वारिणा
नैहारेण निषिच्य नीरजदलैरावीज्य तस्या हृदि ।
न्यस्तस्तत्क्षण एव रेणुमयतां नीतो निशातायते
निश्वासैरपनीयते वरतनोस्तापः कथं वर्ण्यते ॥ ५७ ॥


किञ्च

ज्योत्स्नाभीतिवशान्न याति सविधं चन्द्रोपलज्योतिषां
नावाचीं समुदीक्षते च हरितं मन्दानिलाशङ्कया ।
क्रीडाकीरकुटुम्बकस्य सहते नैवानुकारं गिरां
मुग्धा कोकिलकातरेण मनसा काकं च नालोकते ।। ५८ ।।

सुणाहि सुहिअचूडामणिमअणरइसर अरेहिं बहुसोज्झिज्जत्त जीअणा आसा तुह विरहधम्मदिअहे कासा कासारलच्छीव ।

दिअहंमिव ससिलेहा
णलिणिव्व मअंकक समालित्था ।
दवलुल्लिअ पवणच्छि
विआल इव मिलाइ ललिअंगी ।। ५९ ।।

**विदू** :- (सभयमात्मगतम्) घुसुमचेअतारिसो दाणिं कहिं पडिवज्जिसिदित्ति वेवइ मे हिअअं । तहहि एसो पसरीतबाहपवहेण अणेका ऊण मौलिअत्थंते करुणं इअत्तणं वि अजाइ सुणे उणती एव्वं तीतं ।

**देव** :- (सबाष्पोत्पीडोच्छ्वासम्)

तनीयसी सा प्रागेव दारुणः पञ्चसायकः ।
[1]कोमलो मध्यभागश्च हा हा किं वा भविष्यति ।। ६० ।।

**मणि** :- देव ! किमेतत् ? अवधारय श्रोतव्यम् ।

---



1. केवलो-A.B.C.

रत्न :- तहव तए एव्व तसहृसिअ हिअत्तणेण अत्तलवत्तलेप्पल-हद्धपुल्लसत्थरा उच्छसि अव्व सवेअणं हिअ उव्वहन्ती पडिक्खणं विपझरित हिमसलिलसित्ताओ कप्पूरपुत्तलिआ-ओ आलिंगंती हा चन्दलेहे हा कुमुइणित्ति बहुसो सइस-मीव सट्ठिआओ पिअसहीओ हक्कारंती भिह्मगहिआ कल हवहुंव चन्दणचिल्लम्मि पुलुसिअसरीरा किअह किहविअ इवहेइरअणीओ । णसरणेइ अह्मगाणण कुणेइ विलोअणं वि वीणाए णवरकरदीणवअणा चिट्ठइ वासत्तिआ घर-त्थंते । अहअ किसलअतल्लविरअणी बहुसो तल्लद्धपल्ल-वावचओ । सीसिरुवआरविहाणं सअलाणसहीणसइ इमो वावारो । किंच तारिसदुहपच्चूहादीए मुहुत्तं हुवत्ति एत्ताहे । विअइ सुहअदुहकहाओ वारं वार पसराअ मुच्छा-वेआ । तहअ

सिज्जइ लज्जइ खिज्जइ वज्जइ मुज्झेइ वुज्झेइ ।
वडवडइ सुमइ वअडइ वलट्टइ पव्वाइ ।। ६१ ।।

अण्ण सुणाहि अच्चेरं –

वीणा मुहे सुवेणू
तं आरामंमि माहवीवरअं ।
भूसा सुहरीमणिओ
तीए खण हरिसकारणं होत्ति ।। ६२ ।।

तह मोक्कण हारलइअं णाणारअणकलिअं च भसणजालं ।



विमुसिअ पसाहणाए बहुणत्तामि दामंमितिए बहुमाणो

पुलइ । अपुलइ अगत्तीलज्जइ सिज्जइ अबलाअतमालं । ईसाए रूडमिसा वेल्लितब्बलअं पुलेपूण । किं बहुणा– संतावबेअमइणा णाविह दुःखदूमिअसहीलेआणसवअ सारगुरुआ दीणदिअभागलत्तिवई एताहे । उणअदि भूमि गओ डेअवत्थविसेसो । (संस्कृतमाश्रित्य)

निःशेषं गमिताः प्रयान्ति विरतिं प्रायेण बाष्पोर्मयो
निश्वासाश्च निरन्तरप्रसरणात्ताम्यन्ति खिन्ना इव ।
कामाद्भीतमिवाद्य हन्त हृदयं निष्पन्दातां गाहते
प्रायस्त्वत्सविधं प्रयातुमसवस्तस्याः प्रतिष्ठासवः ।। ६३ ।।

एव्वं अतीक्खणपडिक्खण पसरीतुं मादमोहणिं वेअबहुलि- सो पत्थिअ दुल्लहमरणी भट्टिदारिआए संविलोइअ इकार राहिं चन्दलेहाकुमुइणीहिं अह्मो पेसिदा पादमूलं देवस्स । संदिट्ठी च ताहिं–

किं अणुराअस्स गई अहवसमाणुसविलंभणं सहसा ।
ओअदु करुणाविसेसो जं एव्व मुक्खेक्खिआ अह्मो ।। ६४।।

सपुणासं । तासुहअ मोक्कूण कालं वण्णं दंसणं भूसवामं आसारवारिसेण संसइदजीविदं जीवावेहि भट्टिदारिअ सहं अणत्ति पुणो पुणो विण्णवेमा ।

मणि :- (आत्मगतम्) किमतः परं वक्ष्यति ?

विदू :- (आत्मगतम्) पुणो विमि । अआविपत्ति आसण्णा अह्माणं-



ति चिन्तेमि ।

**देव** :- (दीर्घमुष्णं च निश्वस्य) किं करोमि ? अनुल्लङ्घनीयमार्यस्य शासनम् । कष्टा खलु परतन्त्रता ।

केवलं हतनाम्नैव कामाग्नावाहुतीकृतः ।
ईदृशीं च दशां नीता तादृशी दयिता मम ॥ ६५ ॥

तदलं बहुजल्पनेन । अपदेशेन केनचिदार्यानुज्ञातोऽहमागत एव । अद्य तु पश्य चरमगिरिशिखरमालिलम्बिषते बिम्बमंबुजबान्धवस्य । तन्मम वचनेन चन्द्ररेखां ब्रूहि—

कथमहमिह स्थितः स्यामीदृशमाकर्ण्य वैशसं तस्याः ।
तावदयि सावधाना मम जीवनजीवितं कुर्याः ॥ इति ॥६६॥

**मणि** :- (उत्थाय) अयि ! प्रिये ! उत्तिष्ठ त्वरितमनस्तमित एव गभस्तिमालिनि निवेदनीयो भर्तृदारिकाप्राणलाभः ।

(इति प्रणम्य गगनोत्पतननाटितकेन निष्क्रान्तौ)

**देव** :- (सनिश्वासम्) वयस्य ! वद केन व्याजेन मनोरथं साधयमि ?

**विदू** :- (विचार्य) मिअआवणं हिमहत्तं वध्धुविम्मरिअंमिवाअं उप्पाअं इअग्गतव्वं ।

**देव** :- कथमेवमुच्यते ? (चिन्तां नाटयति)

(प्रविश्य मधुरा)

**मधुरा** :- भट्टा ! भट्टसेणे आवसइ ।



(प्रविश्य कंचुकी)

**कञ्चु**:- (प्रणम्य) देव! आर्यो बलभद्रदेवः समाज्ञापयति - वत्स ! त्वया सह मृगयागतः प्रसेनो नाद्यापि निवृत्तः । स्यमन्तकधर एव वने निलीन इति जनोऽन्यथा मन्त्रयते । यत्परापवादवावदूको लोकः । यदत्र सांप्रतं विचारय । वधूरपि सत्यभामा कनीयसः पितुरन्यथाभावमाशंक्य दुर्मनायत इति ।

**देव** :- (श्रुत्वा, आत्मगतम्) हन्त ! आनुकूल्यं विधेः । (प्रकाशम्) चन्द्रसेन ! विज्ञाप्यतां मद्वचनेनार्यः तदहमेव गत्वा सर्वं समाधाय प्रतिनिवर्त्स्यामि इति ।

**कञ्चु**:- यदाज्ञापयति देवः ।

(इति निष्क्रान्तः)

**देव** :- (प्रतीचीं दृष्ट्वा) हन्त ! पर्यवसितो वासरः ।

परिणतचरणायुधावचूड-
प्रसृमरकान्तिसहोदरैर्मयूखैः ।
परिसरमपरस्य वारिराशेः
सरति [1]सरोरुहिणीसहाय एषः ॥ ६७ ॥

---



1. सरोरुहिणीसर्थ एषः-A. सरोरुहिणीय सार्थ एषः-B.C.

तद्दुर्मनायमानां देवीं सत्यभामामाश्वास्य प्रयाणोद्योगं रच-
यामि । (उत्थाय परिक्रामन् साशंसम्)

सखीनां वचनैस्तत्तदाशासमुदयोचितैः ।
आश्वास्यमानां पश्येयमपि तां हंसगामिनीम् ॥ ६८ ॥

( निष्क्रान्तास्सर्वे )

– चतुर्थोऽङ्कः –

श्रीमत्कृष्णरायमहाराजविरचितं

# जाम्बवतीपरिणयम्

## -- पञ्चमोऽङ्कः --

( ततः प्रविशति हंसः )

हंसः :- आज्ञप्तोऽस्मि भगवता पितामहेन यथा - "समीरसार ! जानास्येव वत्सस्य जाम्बवतो दुहितरं जाम्बवतीमुपनिषद्उपवनतमालेन चराचरकारणेन दुरवलेपासुरोप[1]द्रुतत्रिविष्टपानुजिघृक्षया क्षितिमवतीर्णेन भगवता नारायणेन सह संयोजयेति वीणारसिको मुनिरादिष्ट इति । तेन च निवेदितं तथा संविहितं मया यथा नयो रतिभूमिं गतोऽनुरागः । अद्य तु बलदेवादेशादकाण्ड एव देवो मृगयावनात् द्वारकां गतः । तन्निवर्तनाय प्रयतिष्य इति । तत्त्वमतित्वरितं गत्वा किमनुष्ठितं नारदेन किमागतो वासुदेव इति विचार्य निवेदय" इति । यदियं खलु बिलपरिसरारामसीमा ।



1. दूत-A.

( परिक्रम्य विलोक्य च )

अये ! कोऽयमतिगुरुणि कार्ये प्रवृत्त इव वियता सत्वरमायाति ? (विभाव्य) अयं हि भगवतो नारदस्यान्तेवासी गुणभद्रो नाम गन्धर्वः । तदेतन्मुखेनावगच्छामि प्रस्तुतम् । (उपसृत्य) सखे ! गुणभद्र ! कोऽयमद्य ते व्याक्षेपः ? यन्मामप्यना[1]भाव्य गच्छसि ।

(प्रविश्य गन्धर्वः)

**.गन्धर्वः** (गुणभद्रः)- सखे ! समीरसार ! जाम्बवद्बिलनिवासिनो गुरोरादेशात् द्वारकां गच्छामि । अस्मिन्नेव क्षणे प्रतिनिवर्तितव्यमिति त्वरमाणो भवन्तं न लक्षितवानस्मि ।

**हंस** :- सखे! सरोरुहासनादेशात् पृच्छामि ; निवेदयादितस्तत्रत्यं वृत्तान्तम् ।

**गुणभद्रः**- (आत्मगतम्) चतुर्मुखादेश इत्यवश्यं वक्तव्यम् (प्रकाशम्) अस्ति बिलसमीपे बृहत्कुञ्जो नाम गिरिः । तत्र च गुरोस्सखा घण्टाकर्णो नाम कण्ठीरवः प्रतिवसति । तमाहूय गुरुराह– "घण्टाकर्ण ! द्वारकां गतेऽपि देवे प्रसेनो नाम कश्चिद्यादवो रविवरलब्धं स्यमन्तकं नाम मणिमुरसा दधानो मृगया[2]माचरति । तं प्रतार्य मणिमाहरे" ति । तेन च चपेटापातनगतजीवितात्तस्मादाहृतो मणिः ।



1. भाव्य-A.C. 2. मारवयति-A. म।रचयति-C.

आच्छन्नश्च यदृच्छयागतेन जाम्बवता पराक्रमाक्रान्तस्य तस्य हस्तात्; दत्तश्च दुहित्रे ।

**हंस** :- किं प्रयोजनं मुनेर्मणिहरणस्य ?

**गुण** :- इदमनुसंहितं गुरुणा । असौ प्रसेनः सत्यभामायाः कनीयान् पिता । स च महाप्रभावो मणिः । तदेतस्यैवंभावे देवीमनस्यपरिहार्यप्रसेनमन्विष्यतो देवस्य समागमनमिह प्रस्तुतकार्योपयोगीति ।

**हंस** :- तर्हि किमागतो देवः ?

**गुण** :- प्रसेनादर्शनवृत्तान्तश्रवणक्षण एवाजानेयवाजिप्रायसैनिकः प्रविश्य मृगयावनान्तः पश्यन् दुर्गमार्गप्रविष्टतुरगपदानुसारेण सरन्विलोक्य केसरिकरप्रहारपर्यस्तं प्रसेनं अमृतप्रायकरस्पर्शमात्रप्रत्यापन्नजीवितं च निजपरिवारेण संयोज्य स्यमन्तान्वेषी महान्तं कान्तारभागं प्रविष्टवान् । तस्य च प्रदेशस्यामनुष्यमात्रप्रवेशनीयतया निर्वर्तितसकलपरिजनः एकाकी व्रजन्नेव जाम्बवतः पदानुसारेण बिलमात्मतेजोनिरस्तद्वारतिमिरः प्रविष्टवान् ।

**हंस** :- किमनुष्ठितं महावीरगोष्ठीनिष्ठितेन जाम्बवता ?

**गुण** :- निरतिशयतेजोभरभीतपलायितद्वारपालकानि कक्ष्यान्तराण्यतिक्रम्यन्तःपुरसमीपमतिक्रान्तमाविग्नपरिचारिकानिवेदितं च त्वरितमवलोक्य

आजानुबाहुररविन्ददलायताक्षो
जीमूतमेचकनिरन्तरकान्तिपूरः ।
कोऽयं कृशैरवयवैरतिधैर्यसारः
शृङ्गारवीरसमवाय इवाविरास्ते ॥ १ ॥

महावीर इवायं विभाव्यते । यदयं

घोरज्याघातरेखाकिणगणगुणितोच्चण्डबाहुप्रकाण्डो
मत्तारातीभदत्तस्थपुटितविकटाभोगवक्षःकवाटः ।
दृष्ट्या साटोपपुष्ट्या तृणकणसदृशं वीक्षमाणस्त्रिलोकीं
तेजोभिर्दुर्निरीक्षैर्मुकुलयति महस्संहतीं तिग्मभानोः ॥ २ ॥

कथमनेनालोकि तमोदुरालोकमस्माकं बिलद्वारम्? न केवलं दृष्टं; प्रविष्टञ्च । तदद्यानुज्ञामन्तरेण बलाद्बिलान्तरप्रवेशदुर्ललितसाहसा(यास्मै) स्पृहयामि । इत्यादि निगदन्नेव कोपकलुषान्तरङ्गतिरोहितविचारः परुषभाषणकुपितेन मिलितो देवेन । ततश्च

दम्भोक्तं च विजृम्भमाणरभसप्रारम्भसम्भावित-
स्फारास्फालनघोषभीषणभुजादम्भोलिगंभीरिम ।
स्फूर्जद्गर्जिततर्जनोज्झितगलत्क्ष्वेलास्फुटत्क्ष्मातलं
स्पर्धाबन्धि नियुद्धमुद्धतमभू[1]त्पद्माक्षजृम्भाजयोः ॥ ३ ॥

**हंस** :- भुवनत्रयातिशयितमाजानसिद्धमोजायितं जाम्बवतः ।



1. त्पद्माक्षजकेवलयोः-A. त्पद्माक्षमंभोजयोः-B. त्पद्माक्षमंभोजययोः-C.

सुनासीरद्वेषिप्रबलबलनासीरसुभट-
स्फुरत्तेजोभानुप्रशमचरमक्ष्माधरभुजः ।
स मल्लो भल्लानां कथमिव परिच्छेद्यमहिमा
क्षणभ्रान्तिक्रान्तक्षितिशिखरिसप्ताब्धिवलयः ॥ ४ ॥

**गुण** :- किमुच्यते ? निखिलविश्वम्भराभारभङ्गुर भुजबलसम्भारस्य [1]वीरायितं [2]विश्वंभरस्य । यदनेन

स्वर्लोकनायकविलोचनवारिकुल्या-
कूलंकषाकृषिघनाघनजृम्भणानि ।
रक्षांसि हन्त कति नाम न शिक्षितानि
गोवर्धनोद्धरणदुर्ललितेन दोष्णा ॥ ५ ॥

**हंस** :- ततस्ततः ।

**गुण** :- तदानीमनम्बुदममृतवर्षमिवानुभवता प्रतिकलशिरःकम्पविस्रस्तजटाबन्धनेन गुरुणा सभयप्रधाविताभिरन्तःपुरिकाभिः सन्निहिताया जाम्बवत्यास्तदानींतनीं दशामवलोक्य कलहकुतूहलिनाऽपि निवारितो युद्धसंरम्भः ।

**हंस** :- हन्त ! कथमेतदपि संवृत्तम् ? ततश्च ।

**गुण** :-

तदिह परमं तेजो यत्पादपद्मनखावली-
रुचिरुपनिषत्कान्तासीमन्तमौक्तिकमालिका ।



1. वीरमुचित-A. 2. विश्वंभरस्यवदनेन-B.C.

निखिलजगतां [1]रक्षाकृत्यं यदेकपरायणं
निरतिशयितानन्दावाप्त्यै यदीयविलोकनम् ॥ ६ ॥

स एष पुरुषोत्तमस्सकललोकरक्षाकृते
निहन्तुमसुरद्विषस्समभवद्यदूनां कुले ।
सनाथयति ते गृहान् स इह वासुदेवः स्वयं
स्यमन्तकमहामणेर्गमनमार्गमन्वेषयन् ॥ ७ ॥

इत्यादि जाम्बवता सल्लपन्नेवमपवार्य गुरुराज्ञप्तवान्– "वत्स ! सङ्घटितप्राय एव निदेशो लोकेशस्य । किन्तु देवो राधामुखावरोधानुरोधमन्तरेण सहजदक्षिणो वत्सां न परिगृह्णीयात् । किञ्च मानुषदुष्प्रवेशप्रदेशप्रविष्टं देवमनुसृत्य किमपि शङ्केत सहजस्नेहकातरो बलदेवप्रमुखो बन्धुवर्गः । तत्त्वमतिजवं विहायसा द्वारकां गत्वा कुशलिनं निवेद्य [2]देवं बलदेवाय यथावदावेदितनिखिलवृत्तान्तश्चान्तःपुरानुज्ञासूचकं कुचेलं चानयेति । तदमुं वृत्तान्तं निवेदय सरस्वतीकान्ताय । अहमपि गुरोरादेशमनुतिष्ठामि ।

**हंस** :- तथा ।

( उभावपि निष्क्रान्तौ )

– **शुद्धविष्कम्भः** –





1. शिक्षाकृत्यं-A. 2. नास्ति-B.C.

(ततः प्रविशति नारदस्सविलक्षो जाम्बवांश्च)

जाम्बवान् :–

कलयति कलुषत्वमन्तरात्मा
परमपराधपरिग्रहादिदानीम् ।
फलमिदमविमृश्यकारिताया
यदि वद नारद किं मया विधेयम् ॥ ८ ॥

(सानुतापम्) प्रपन्नपराधीनेन सूचितमपि स्वमूर्त्यन्तरागमनं रघुनाथेन मूढात्मना [1]मया नालक्षितम् ।

वैदेहीवदनाम्बुजन्मनि दृशं बद्धानुरागां [2]दिशन्
वात्सल्यादनुजाननेषु करुणासिक्तान् कटाक्षान् किरन् ।
आविस्तोषमरुन्धतीपरिबृढेनापाद्यमानस्तुति–
र्देवो दाशरथिः प्रसादमधुरः स्वप्नेऽद्य दृष्टो मया ॥ ९ ॥

किञ्च

समीहते हन्त ममापि मूर्धा
प्रसह्य पादे पतितुं यदस्य ।
जयेति वक्तुं यतते नु जिह्वा
महस्तदेतद्ध्रुवमप्रमेयम् ॥ १० ॥

इति तत्कालोत्पन्नमतिनाऽपि क्रोधान्धेन न विचारितम् ।



1. नास्ति-A. 2. दिशः-B.C. दिशं-A. 

**नारदः**- महावीर! किमेवमनुतप्यसे? किमाजानसिद्धसाहसेनाऽत्रभवताऽपराद्धम्? पश्य नियुद्धेन खलु तोषितवानशेषजगदुदयरक्षाप्रलयकारणमपि सव्यसाची शङ्करम्। (आत्मगतम्) भवतु; अयमेवावसरः प्रस्तुतप्रस्तावस्य। (प्रकाशम्) अथापराद्धमात्मानं मन्यसे

स्यमन्तकं प्रदायास्मै प्रथमागमकारणम्।
अपराधापनोदाय पश्चाद्वत्साऽपि दीयताम्॥ ११॥

**जाम्बवाः**- (ससन्तोषसंवरणमात्मगतम्) किमिदमपि सम्पद्येत?

विना यदुकुलोत्तंसं वत्सायास्सदृशो वरः।
न लभ्यते त्रिभुवने विधेरीहा तु कीदृशी॥ १२॥

(साशंसम्)

वैवाहिकं किमपि वेषमुपाश्रयन्तीं
कल्याणकङ्कणवता करपङ्कजेन।
कृष्णेन साकमधुना मणिवेदिकायां
पश्यामि किन्नु मम भाग्यवशेन वत्साम्॥ १३॥

कुतो मे तावदाशास्यम्? (सनिर्वेदम्)

कन्याया जननं विनिन्दति परं माताऽपि किं वा परे
जामातुस्सदृशस्य साधनविधावेवं प्रयासो महान्।
अन्यस्मै निरपेक्षमर्पणमहो संवर्ध्य यत्नाद्वहो–
रेवं संसरतः सुतेति नियतं [1]मूर्ता व्यथा चेतसः॥ १५॥



1. मुक्ता-A.B.C.

**नारदः**- किमिति निश्चलदृष्टिश्चिन्तयसि ?

**जाम्बवाः**-

वरकाः क्व वयं हन्त क्व च लोकैकनायकः ।
किं मया तत्तपस्तप्तं यत्तप्तं कलशाब्धिना ॥ १५ ॥

**नारदः**- (साक्षेपम्) अत्रभवतो वा किं परिहीयते ?

ब्रह्मा लोकपितामहो जनयिता प्राचेतसीनां गिरां
पात्रं दोर्बलमप्रमेयमहिम स्वामी रघूणां पतिः ।
आयुः कल्पविराम[1]साक्षिकमिदं भाग्यं तवैतादृशं
जामाता यदि लभ्यते यदुकुलोत्तंसः किमस्मात्परम् ॥१६॥

किञ्च

संसार[2]कुहनानाट्यनटः कैटभसूदनः ।
भागधेयफले पक्वे न विचारो विधीयताम् ॥ १७ ॥

तद्विहितवैवाहिकवेषाया वत्साया एव हस्तादुपायनीकारय स्यमन्तकम् ।

**जाम्बवाः**- परवानस्मि तत्रभवतो [3]निदेशेन ।

**नारदः**- तर्हि समुचितसंविधानाय प्रविशाभ्यन्तरम् ।

(जाम्बवान् निष्क्रान्तः)

**नारदः**- (परिक्रम्य सानन्दम्) सर्वथा सङ्घटितप्राय एव [4]निदेशस्सरो-

---

1. साक्षित-A.B.C. 2. कुविना-A. कविता-B.C. 3. निर्देशेन-B.C.
4. निदेशः-B.C.

जासनस्य । तत्कन्यान्तःपुरोद्यानमभिवसतो देवस्य समीपमेव गच्छामि । (विलोक्य) तदिदमुद्यानद्वारम् । (प्रवेशमभिनीय दृष्ट्वा सानन्दम्)

विकसदतसीगुच्छच्छायामनोहरमांसलैः
किरणनिवहैस्सर्वानुर्वीरुहोऽपि तमालयन् ।
सुकृतमलसैरङ्गैः [1]ऋक्षाधिपात्मभुवो वहन्
हरिरधिवसन् लीलाशैलं विभाति घनो यथा ।। १८ ।।

(सरोमांचम्)

अविद्यादूराणामनिशमनिदंभावविदुषां
मनोभिर्यन्मृग्यं मुकुलितमलानां सुकृतिनाम् ।
अमिथ्याव्याहारैरपि न कलितो यस्य महिमा
तदेतत्प्रत्यक्षीभवति पुरतो धाम परमम् ।। १९ ।।

(उपसर्पति)

(ततः प्रविशति यथानिर्दिष्टः पर्युत्सुको देवः)

**देव** :-

तदा महति सम्भ्रमे भृशमकाण्डसंजृम्भिते
किमेतदिति सत्वरोत्तरलमापतन्ती रयात् ।
कृशालसविपाण्डरश्लथसुदुर्बलैरङ्गकै-
र्विषादशबलां मुदं व्यधित मद्दृशोः प्रेयसी ।। २० ।।

---



1. ऋक्षायपद्मभुवाऽसहन्-B.C.

हन्त ! किमिति कथयामि ?

आवेगादतिवेगवत्यपि मनस्याजानगंभीरयोः
भारेण स्तनकुम्भयोः प्रतिपद[1]प्रक्षेपखिन्नानना ।
प्रागेवाधिकदुर्बलाऽसि शनकैर्याहीति सख्या वचो
नादृत्यैव दृशोर्ममाकृत सुधाधाराभिरासेचनम् ।। २१ ।।

तदा हि

[2]जनकेन निजेन साकमेनं
जनमालोक्य [3]निबद्धबाहुयुद्धम् ।
परितोषविषाददैन्यभीति-
प्रचुरां कामपि भावनामयासीत् ।। २२ ।।

(सोल्लासम्)

तटलुठितबालशफरी-
तरलालसमसृणमन्दतारेण ।
तस्या वलनेन दृशो-
श्चेतो मम किमपि चञ्चलं जातम् ।। २३ ।।

हन्त ! महतीं मन्मथव्यथामधिरूढा प्रणयिनी ।

पाण्डु[4]क्षामकपोललम्बपरुष[5]प्रावारकश्रेणिका-
नीहाराम्बुनिषेकखिन्ननलिनप्रम्लानवक्त्रप्रभा ।

---

1. प्रक्षोस-A. 2. जनको न निखिमनसाकमेनं-A. जनको नविजने साकमेनं-B. 3. नियुद्ध-A.B.C. 4. काम-A.B.C. 5. प्रायोशुक-B.C.

मुर्ता कीर्तिमिव स्मरस्य दधती मुग्धालसैरङ्गकै-
र्लावण्यातिशयेन केवलमियं सेति स्फुटं निश्चिता ॥२४॥

हन्त ! निष्ठुरा हि वीरगोष्ठीनिष्ठता । यत :-

न विरतमहहा मया नियुद्धा-
त्तरलदशामपि तां विलोक्य बालाम् ।

(साश्चर्यम्)

सकरुणमनसा न्यवारि वेगात्
कलहकुतूहलिनाऽपि नारदेन ॥ २५ ॥

**नारद** :- सन्निहितमपि मामपश्यन्नाकुल इव विभव्यते देवः ।

**देव** :- (सानुध्यानम्)

अम्बान्तः प्रविशेति वत्सलतया पित्रातिमात्रादरात्
आभाष्य प्रहिताऽपि सा क्षणमिव व्याजाद्विलम्ब्य स्थिता ।
आलोलालसलालसोत्तरलितस्मेरस्फुरत्तारका-
मध्यारोप्य शनैर्दृशं गतवती मत्प्राणसन्धारणा ॥ २६ ॥

(सानुतापम्) हन्त ! भोः !

विरहो दैवयोगेन यदेकस्मिन् गृहे भवेत् ।
पिपासितस्य तदिदं प्रपाद्वारिनिरोधनम् ॥ २७ ॥

**नारद** :- भवत्वेवं तावत् । (उपसृत्य) विजयतां देवः !



**देव** :- अये ! नारदः !

**नारद** :- देव ! कोऽयमद्य चित्तव्याक्षेपः ? यत्सन्निहितेऽपि भक्तपरमाणौ न लक्षितं देवेन ।

**देव** :- (आत्मगतम्) भवत्वेवं तावत् । (प्रकाशम्) [1]महर्षे! अत्र स्थिते मयि प्रसेनप्रमुखादानुयात्रिकादनुश्रुतवृत्तान्तो बलदेवप्रमुखो बन्धुवर्गः किं चिन्तयिष्यतीत्यनया चिन्तया परवानस्मि ।

**नारद** :- देव ! अलमनया चिन्तया । विदितमहिमातिशयो देवस्य किमिति विचारयेत् बलदेवो वसुदेवो वा । किञ्च मयाऽप्येवमेव मनसा निश्चित्य देवस्य कुशलावेदनाय द्वारकां प्रहितो गुणभद्रः ।

**देव** :- (सानन्दम्)

इदं हि प्रेमसर्वस्वमयं प्रणयडम्बरः ।
इयं सौजन्यसीमा यदनुक्त्वा [2]प्रीतिकारिता ॥ २८ ॥

( आत्मगतम् ) अप्यनुज्ञायेत।ऽयमारम्भोऽस्माकमाभिजात्यकृतानुरोधया राधया ? भवतु; कथमियमस्माभिरेव जाम्बवती याच्येत । भवत्वेवं तावत् । (प्रकाशम्) महर्षे ! जाम्बवद्बहुमानादत्रभवतश्च प्रार्थनया स्थितोऽस्मि । [3]तत्प्रकाशितास्मदागमनप्रयोजनोऽस्मानभ्यनुज्ञापयतु भवान् ।

---



1. नास्ति-C. 2. प्रतिकारिता-A.B.C. 3. तत्प्रकारित-A.B.C.

**नारद** :- (सस्मिताकूतम्) देव ! किं तत्प्रयोजनम् ? यत्र मया प्रयोजकेन भूयते ।

**देव** :- (सस्मितम्) किमन्यद्रत्नप्रदानमन्तरेण ?

**नारद** :- कन्यारत्नप्रदानमन्तरेण च ।

**देव** :- (सोल्लासम्) कथमिदं सम्भाव्येत ?

**नारद** :- सम्भावना तिष्ठतु । किमस्ति देवस्य दया वत्सायाम् ?

**देव** :-

तन्मे मनो हरति यत्तव सन्निधाने
[1]सा मां निजेन जनकेन कृताभियोगम् ।
आलोक्य कातरतयाऽकुलितान्तरङ्गा
निष्पन्दमास्त निभृतप्रसरैरपाङ्गैः ॥ २९ ॥

**नारद** :- देव ! तदलमिह यत्नापेक्षया; यदनन्यसामान्यमहिम्ना गृहागते[2]नातिथेयीमर्हता देवेन बद्धयुद्धमात्मानमपराद्धमाशङ्कमानस्तदपनोदाय दुहितरं परिजिग्राहयिषति जाम्बवान् । किन्तु निराकरणकातर्यात् संशेते ।

**देव** :- (साक्षेपम्) को निराकारो नाम ? किमवशिष्यते ?

पौत्री पद्मभुवस्साक्षात् स्मरसञ्जीवनं वयः ।
रामणीयकसौन्दर्यलावण्यमधुरं वपुः ॥ ३० ॥



1. सामान्निजेन-A. अस्मान्निजेन-B. स्मान्निजेन-C. 2. नातिथेयमहता-A.B.C.

किं बहुना? सर्वमपि भवतैवास्मदाशयज्ञेन संविहितम्।

**नारद** :- (सप्रश्रयम्) कथमिदमुच्येत ?

उत्पत्तिस्थितिसंहारा यदिच्छामात्रकल्पिताः।
जगतां संविधातारस्तस्य कृत्येषु मादृशाः ॥ ३१ ॥

**देव** :- मा मैवम्।

साधयन्ति महत्कृत्यं सहायेन मनीषिणः।
विकासयति पद्मानि विभातेन हि भास्करः ॥ ३२ ॥

किन्तु विदितमेव तवापि यथा प्रकृत्यसहनो बहुमानगर्वितश्च [1]राधामुखोऽवरोध इति। तदनुज्ञामन्तरेण कथमिमां स्वीकरिष्यामीति शङ्कते चेतः।

**नारदः**- (स्वागतम्) किं चिरायितं गुणभद्रेण ?

( नेपथ्ये )

हा कहेहि कथं साभीसिओ कण्हमहाओ किं भणइ? आरामगओत्ति।

**देव** :- (श्रुत्वा ससम्भ्रमाश्चर्यम्) महर्षे! कुचेलस्य स्वरसंयोग इव। कथमेतत् ?

**नारदः**- देव! प्रायो गुणभद्रेण समानीतो भवेत्।

**देव** :- तर्हि वयमवरुह्य क्रीडागिरेरवधारयामः।



1. राधामुखो बरोऽस्य इति-A.

**नारदः**- यथाभिरुचितं देवाय ।

(अवरोहणनाटितकेन [1]परिक्रमतः)

**देव** :- (साश्चर्यं समन्तादवलोक्य)

सौवर्णास्तरवः सुपर्णदृषदुत्कीर्णानि पर्णान्यलं
बालाः पल्लवराशयोऽपि परितश्शोणाश्मभिर्निर्मिताः ।
क्लप्ता मौक्तिकसञ्चयेन मुकुलस्मेरा प्रसूनश्रियो
यद्यत्रापि परिस्फुरन्ति निखिला धर्मा विकासादयः ॥३३॥

**नारदः**- किं दुष्करं पुष्करासनसङ्कल्पस्य ?
इतोऽपि

वेदिर्मरकतैर्बद्धा मूले केसरभूरुहः ।
रचितेव विवाहार्थं

**देव** :- (सौत्सुक्यम्) कयोः ?

**नारदः**- (सस्मितम्) रतिप्रसवबाणयोः ॥ ३४ ॥
तदिहैवासनपरिग्रहं करोतु देवः । यदयं दृश्यते कुचेलः ।

(उभौ वेदिकाधिरोहणनाटितकेनोपविशतः)

(प्रविश्य सम्भ्रान्तो विदूषकः)

**विदू** :- भो वअस्स ! कहिंसि ? महउण लोअणाण पहुप्पत्ति दे-
खिउं ।

**देव** :- (किंचिदुच्चैः) वयस्य ! इत इतः ।



2. परिक्रम्य-A.B.C.

**नारदः**- इत इतः; प्रायेणापरिचितदिव्यदेशप्रकाशतया पर्याकुलीभवति ।

**विदू**:- (आकर्ण्य) अमअरसभरिअणवलजलहरज्झरणिप्पण्णंई व अस्सस्सचिअ एसो सरसज्जोओ । (कथंचिदक्षिणी उन्मील्य) अम्हो ! दिठ्ठो वअस्सो । कहं नारओवि ! (उपसृत्य) साहसिअ विअई होइ ।

**देव** :- इत इतः ।

**विदू**:- (उपविश्य) वअस्स ! दिट्ठिआ दिठ्ठोसि । णजइ गुणभद्दो आवसेज्ज सव्वो सस्सओच्चे । अजीअलोओ ।

**देव** :- कथमिव ?

**विदू**:- (सोपालम्भम्) विलत्तरप्पवेससुहिदेण तुए किणज्जइ अह्माण आवत्ति ।

**देव** :- [1]कथं कथम् ?

**विदू**:- वअस्स ! पसेणमुहसेणावइपहिअस्स जंघिअस्स मुहादो समंतअं अण्णेसत्तो अमाणुसं पवेसणिज्जं पएसं पविसिअ दाणिं विण्णिअत्तो भट्टेत्ति सुणिअ कितस्स चित्ताए सभअबलदुप्पेच्छ परक्कमगंभीरहुअस्स वच्छस्सत्ति भणिअ विणिसग्ग सिणेहकाअरं मिणा सग्गलग्गडो अलजुउलत्त रपह्मलिअ बाहप्पवहोल्लिआ परिलम्मि बलदेवम्मि कि-

1. नास्ति-B.C.

रिकिरिआ सुणिअ उत्तंते पज्जजज्जरिअ वेल्लरीपणसरि सम्मिओरोहे चरमसइलत्तरि आसुरा दंसणकज्जत्त कमलारिम्मिविअणिव्विआसेदिअहविहअ च्छुहामोहंदस्सण दुहिअ चओरउलम्मिव संदावमइए सरअतिरहिअ जलहर जूरत्तचादअणि उरुंब्बम्मिअ गअजीवणासे जीअलोए किं एदं अब्बाण सहवं यक्किदम्मि तात वसुदेवे ममम्मि इसि मुणिअवुत्तंतं मिविभअ पडिवण्ण मूअत्तणंमि एव्वं जाए भणिउं पारत्थोत्थवाइरिओ ।

**नारदः**- हन्त ! कथमेवं संवृत्तम् ?

**देव** :- सर्वतः प्रमादशङ्की स्नेहातिप्रसङ्गः । ततस्ततः ?

**विदू** :- तदोअ (संस्कृतमाश्रित्य)

"अयं हि शिशुचेष्टिताकलितपूतनापातन–
प्रभृत्यमितसाहसप्रथितविक्रमोपक्रमः ।
स किन्तु परमः पुमानपि भयात्समाशंक्यते
कथं कलयते भवानपरमार्थविद्भावनाम् ॥ ३५ ॥

किञ्च, केशिनाशनमरिष्टारिष्टकरणं कुवलयापीडचाणुरमारणं कंसध्वंसो जरासन्धातिसन्धानं नरककदनं भारतसमरभरसहत्वञ्चेत्यन्यानि च समधिकमायाप्रभावपराक्रमाश्चर्याणि वीर्याणि तस्य किमन्यैराशंकते । इममपि मङ्गलोदर्कमेव तर्कयामि" । इअभणत्तम्मि उध्धउरिअहोदु जहिवच्छो तहिं जिअ जामोत्ति पउणज्जए बलदेवे झत्तिणहपहा दो ओरुहिअ गुणभद्दो तुहविलप्पवसादो आरि

हिआ सअलं उत्तंतं णिवेइअवंतो । तदो अपहाद कमलारं मिविअ विआसमइए लाले अणण्णं परिरंभंते सुणरिंदेसु हरिसबाहगग्गरव अणम्मि तादे संदोसपरवस्सो अंअबल-बद्दो गुणभद्दत्त हसमणिद्दवत्तो जह हवत्तसंभावेइ ।

देव :- ततः ?

विदू :- तदो अहंवि अणिवेउदण पुण्णवंतगुणहणा साए मुक्क-सिहो गलत्तावारिल्लो तुरिअंगअ तुहकूसलं देवीणं णिवेइ-अवत्तोह्मि ।

देवः - (साशंकम्) किमभिहितं देवीभिः ?

विदू :- पहरिस परिअम्मि देवीलोए मणिअउत्तंताए इसिरोधक-च्चूडाए राहाए भणिअं किणे णववएसेण इमं कज्जं साहे [1]उण्णाओ महाभाओत्ति ।

देव :- (सस्मितम्) ततः किं प्रतिपन्नं सर्वाभिः ?

विदू :- सव्वा किं तं कज्जंति अणुबन्धं जमाणा सवप्प जम्बवई-उत्तंतं कहिअवई । तदो मए भणिदं अत्तहो दीओ एव्वं माकुणत्तुमणम्मि तुह्माणं आणं विणा किहतं पडिगहिस्सदि वअस्सेन ।

देव :- (साशंकम्) ततस्ततः ?

विदू :- ततोअ कणिपुउपच्चु जीवण दुणिसिआए सच्चभामाए

1. अणआ-C.

चिट्ठइ । सावि एक्कावरं अह्माण आणामित्तं पुणचंददीसणं झत्ति होदु कुणहअण मदित्ति भणिअं । मएचि को वा चुहं भहिअरसंउपर चुलठ्ठीकट्टअवुसंकाए किं परिहीअदि । अणुमदिक्करिअ गारवं ओलंबेहंति वाहरिअं तदोअ ताहि तह होदु अंतेउरढतत्तं अंअउत्तस्स को णिवेअइत्ति सइत्ति पज्जादलाओ ।

**नारदः-** (सानन्दम्) देव ! गतश्शङ्काङ्कुरः ।

**देव :-** किन्न घटयति भवदानुकूल्यं नाम ? ततस्ततः ?

**विदू :-** तदो अहं चिअदामित्ति मणिअ विसज्जिओ तासि गुणभद्दं समिलिअमंवि तहणे हित्ति अब्भत्तिअतोह्मि तदो सोमं-हत्थेगं कुणण्णहं उप्पडिओ । तदोअ

कत्थमही कही कहं दिसाओ कहि किहणुदिअहरबिंबं ।
कहि उणभद्दो कहहंइ अणज्जइ णाइ गमणवेएणं ।।३६।।

तहि णिमिल्लआलोअणइ हउंमिल्लिआ ।

**देव :-** (सानन्दाश्चर्यम्; आत्मगतम्)

क्वाऽऽखेटः क्व वयं क्व रामसदनोद्यानं क्व तत्रासिका
तस्याः क्व प्रसवायुधस्य भुजयोस्तत्तादृशं जृम्भणम् ।
क्वेयं भूः क्व रवेर्वरादधिगतं रत्नं क्व चात्रागति-
र्भूयोऽस्माकमिदं हि सर्वमहहा चातुर्यमुद्रा विधेः ।। ३७ ।।



( नेपथ्ये )

भो भोः परिचारिकाः! शृण्वन्तु भल्लूकमल्लस्याज्ञाम्।

कस्तूर्या हिमवारिकर्दमितया लिम्पन्तु कक्ष्यान्तरा-
ण्यासिञ्चन्तु पटीरपंकिलजलैरायामिवीथ्यन्तरम्।
मुक्ताचन्दनमालिकाविरचनैश्शृङ्गारयन्[1]त्वङ्गणा
न्याबध्नन्तु नवीननेत्रपटलैरुल्लोचमल्लासिनम्॥ ३८॥

किञ्च

रुचिरकनकरम्भास्तम्भसम्भासितानां
रचितविशदमुक्तारङ्गवल्लीयुतानाम्।
अनुसदनमिदानीं देहलीनामुपान्ते
[2]रचयत मणिदीपान् रम्यकीलाकलापान्॥ ३९॥

(सर्वे कर्णं ददति)

**नारदः**- (दृष्ट्वा) देव! सन्निहितोऽयं विवाहवेषशालिनीं वत्सामु-
पलालयन् पैतामहिः।

**देव**:- (दृष्ट्वा सपुलकोल्लासमात्मगतम्) हन्त! मयि प्रसन्नो भगवान्
पञ्चशरः। यतः

करकिसलयं कृत्वा सख्या भुजोपरि सालसं
पितुरनुपदं पादन्यासं विधाय शनैश्शनैः।
कुचकलशयोर्भारादानम्य किञ्चिदिवाङ्गकं
स्फुरति पुरतो भूयो मन्नेत्रपुण्यपरम्परा॥ ४०॥



1. त्वङ्गना-A.B.C. 2. चरयत-A.C.

हन्त ! सुश्लिष्टता विवाहवेषस्य ।

वासो वसाना नवचन्द्रिकाभं
कस्तूरिकाचित्रकचिह्नितास्हा ।
विभाति मुक्तामणिभूषितेयं
राकासुधांशोरधिदेवतेव ॥ ४१ ॥

(प्रकाशम्) महर्षे ! सम्भावनीयः खल्वयं साक्षादम्भोज(भव)-सम्भवः ।

(सर्वे उत्तिष्ठन्ति)

(ततः प्रविशति जाम्बवता निवेद्यमानमार्गा ससखीजना जाम्बवती विभवतश्च परिवारः)

**जाम्ब**:- (सानुसन्धानमात्मगतम्) पुढमं मिअआ एसोवच्छा किस पंडिरंग सट्ठाणो णपरिअण अणाणट्टो दिठ्ठो अणुमें तह विहारिओ । (सानन्दविचिकित्सम्) जं तस्स तारिसं अवत्थं णिवण्णीदवतीरअणकलि आदं आसासणं महत्ति संहाविअ पच्चक्खदो दक्खिअ मिअ अंअंण्णारिसं जाअं । (विचिन्त्य) कहि एवि चन्दलेहाएकविवाहसेण वीससमि । होदु, पुच्छामि । (अपवार्य) हला ! कहिं गच्छीअउ ?

**चन्द्र** :- (सस्मितमपवार्य) तहिं चिअ ।

**जाम्ब**:- किं [1]भणिदं होदि ?

**चन्द्र** :- जहि जाउत्तरिअं तुह हिअअम् ।



1. भणइं-A. गणिदं-B.C.

**जाम्ब**:- वं कदमों कूणपण ।

**चन्द्र** :- कहं कहिअं बहुसो पुणो पुच्छसि तस्स सुहअंस तुअ पडि वाएइ उज्जाणं गच्छामो ।

**जाम्ब**:- (अधोमुखी परिक्रामति)

**जाम्बवान्**:- (आत्मगतम्)

आवेशादविचार्य केसरिकरादच्छिन्दता तन्मणिं
पश्चात्तेन जगन्मयेन महसा दोर्युद्धमाबध्नता ।
आगो येन मया व्यधायि तदपाकर्तुं स एवाधुना
वाक्याद्वैणिकतापसस्य हरये दित्सामि वत्सामिमाम् ॥४२॥

कथमिव जगदनुजिघृक्षया क्षितिमवतीर्णमधोक्षजं मद्दुहितरं प्रतिगृहाणेति वक्ष्यामि ? भवतु; नारदमुनेस्सन्निधानमेव श्रेयसो निदानम् । (सवात्सल्यं प्रकाशम्) वत्से ! इत इतः ।

(सर्वे परिक्रामन्ति)

**कुमु** :- (अपवार्य) हला ! अज्ज [1]फलिस्सदि भट्टिदारिआए मणरोहत्ति संतुसिअं इमाए विरहवेदणासकाए अण्णासवाटइ हिअअं ।

**चन्द्र** :- सुहिअ सुणिउण इमं दुहिअंपि हिअअं [2]विणोदइस्सामो । तारिस दस सहीए दट्ठूण कहण्णु जिविउस्संकं ।



1. फलिस्सइ-A. 2. विणोदइस्सामि-C.

**विदू** :- (सभयं) का इमो भूदविसेसो ?

**देव** :- अरे ! किं विकत्थसे ? अयं खलु तत्रभवान् जाम्बवान् ! तदभिगमनेन सम्भावनीयः ([1]उत्तिष्ठति; सर्वे तथा कुर्वन्ति)

**जाम्बवान्**:- कथं सुमानुषानुकूलं विनयति ? (विवृत्य) भोः कञ्चुकिन् ! उपनय स्यमन्तक[2]संहितं पटलकम् ।

**कञ्चकी**:- यथाज्ञापयति स्वामी । (तथा करोति)

**जाम्बवान्**:- (गृहीत्वा) तद्वत्सायाा एव हस्तादमुमुपायनीकारयिष्यामि ।

**जाम्ब**:- (देवमालोक्य [3]आत्मगतम्)

दीसइ धूसरकंती निवेइअंभहिअ अणिव्वेओ ।
पुण्णा भवेइ आए पुणोवि महणअण पुण्णपरिणामो ॥४३॥

(सलज्जावेशं प्रकाशम्) हला ! चन्दलेहे ! पुरोवच्छ तुमं महउण चलणासज्झसेण अग्गदो णचलत्ति । (चन्द्रलेखान्तरिता परिक्रामन्ती आत्मगतम्) लज्जे किं ओरज्जं मुहुत्तहुत्तंमिदेव्वे तुज्झ मए जम्भणा हि एत्ताहे जपिअ दीसण समएमं पडिऊलअत्तणं वहसि ।

**देव** :- (विलोक्य आत्मगतम्) हन्त ! फलितं मे भागधेयेन ।

---



1. नास्ति-A.B. 2. सहितं-B. 3. नास्ति-A.B.

स्फारोत्तारविलोचनामृतझरीपूरैस्समासिच्य मां
लज्जावेशवशात्पुरस्सहचरीगात्रेण संछादिता ।
आकम्पाद[1] यथातथप्रसरया गत्या शनैरेयुषी
लक्ष्यालक्ष्यवपुर्लता विजयते लावण्यकल्लोलिनी ॥ ४४ ॥

**जाम्बवान्**:- वत्से ! गृहण मणिमुपायनीकर्तुं यादवचूडामणेः ।

**जाम्ब**:- (सलज्जं गृह्णाति; आत्मगतम्) पुढमदं हिअअं चिअउवाअणीकअं किणेण ।

**नारद** :- (विलोक्य साश्चर्यम्) देव ! पश्य पश्य;

आमूलमाशाखमनोकहानामकाण्ड एवाहितपल्लवश्रीः ।
स्यमन्तकस्यैष रुचिप्रवाहः पातालबालातपमातनोति ।।४५।।

**जाम्ब**:- (अपवार्य) हला ! चन्दलेहे ! तादस्स समीवे कहं इमिणो हत्थम्मि; लज्जापरव्वसारअणंदेमि ।

**चन्द्र** :- (अपवार्य) मए वंकूण आणं तादस्स ।

**देव** :- (दृष्ट्वा सानन्दमात्मगतम्)

स्यमन्तकव्याजमणिप्रदीपं करे वहन्ती कमलेक्षणेयम् ।
लोकान्विजेतुं विहितोद्यमस्य [2]लोहाभिसारं कुरुते स्मरस्य ॥ ४६ ॥



1. दयता तथा-B.C. 2. लोहाभिघात-B.

**जाम्बवान्**:- (उपसृत्य सविनयभयम्) देव! प्रमादभीतापराधो भक्त-परमाणुः प्रणमति ।

**देव** :- (सविनयम्) किमिदमनुचितमाचर्यते; किमपराद्धं निसर्ग-वीरगोष्ठीनिष्ठितेन भवता ?

**जाम्बवान्**:- (चन्द्ररेखां साकूतमवलोकते)

**चन्द्र** :- (शनैः) हला! किं काअरासि? उवाणणीकरिअ मणिं पणम सुमहाभाअं । (इति बलान्मणिमुपायनीकारयति)

**देव** :- (सकम्पं गृहीत्वा सरोमांचावहित्थमात्मगतम्)

अङ्गेनाङ्गं विशन्तीव [1]दिशन्ती मे स्यमन्तकम् ।
हि्रया तरलिता तन्वी दत्ते विश्वं करोदरे ।। ४७ ।।

**नारद**:- (आत्मगतम्) चिराय चरितार्थे चक्षुषी । यदिह

कान्तावितीर्णमणिकान्तिझरीपरीत-
रोमाञ्चकञ्चुकितदीर्घभुजार्गलोऽयम् ।
प्रत्यग्रकुड्मलितपल्लवितैकशाखो
जागर्ति कश्चिदिह जङ्गमपारिजातः ।। ४८ ।।

हन्त !

देवोऽयमादिमरसः किमु (देहकान्त्या)
मूर्ता नु सेयमपि मोहन(दिव्य)विद्या ।
किं ब्रूमहे बहुफले ग्रहिरद्य जातो
लोकस्य कोऽपि ननु लोचनपुण्यराशिः ।। ४९ ।।



1. विशन्ती-A.B.C.

( नेपथ्ये )

[1]आश्चर्यमाश्चर्यम् ! इह खल्वकाण्ड एव

सहस्रेणा(दित्यै)स्स्फुरितमिव पातालकुहरात्
तटिद्भिर्लक्षेण स्थगितमिव सर्वं बिलमिदम् ।
निरस्यन्नुत्कर्षैः स्तिमितमिव [2]कान्त्यन्तरमसौ
नवस्तेजोराशिर्नयनमहिमानं रहयति ॥ ५० ॥

(सर्वे दृष्टिप्रतिघातं रूपयन्ति; पुनर्नेपथ्ये)

क्व जाम्बवानयं; इच्छानुविधायी चरस्थावरजगन्निर्माणो भगवान् पद्मासनः प्रत्यासीदति । (सर्वे आकर्णयन्ति)

**देव** :- (दृष्ट्वा) कथमित एव ?

दृशमनुकलं बद्धानन्दां दिशन्मसृणस्मिते
वदनकमले वाण्यास्साहित्यसौरभमेदुरे ।
अयमभिपतत्यादरादारुह्य हंसमनुत्तमं
कविरकृतकव्याहाराणां चराचरकारणम् ॥ ५१ ॥

(ततः प्रविशति ब्रह्मा सरस्वती च)

**ब्रह्मा** :- अयि ! वाग्देवते !

सम्पश्यन्ति यदान्तरेण यमिनः संविज्जुषा चक्षुषा
यस्यास्मत्प्रभृतिर्विवर्तमहिमा लोकश्चरः स्थावरः ।



1. आश्चर्यम्-B.C. 2. कान्त्यन्नरभस-B. कात्यत्नरभस-C.

वाचोयुक्तिरकृत्रिमाऽपि सकला यस्यापदानावली
नित्यानन्दनिरत्ययं तदधुना निश्रेयसे दृश्यते ।। ५२ ।।

**सरस्वती** :-

तिहुवणरक्खिए च्छिहाणिभरहिअअकरुणपभ्भारो ।
कुसत्थोलोअणं कूहणगोवत्तणं वहइ ।। ५३ ।।

**ब्रह्मा** :- तदवरोहावो हंसात् (इति तथा कुरुतः)

**देव** :- (ससम्भ्रममभ्युद्गम्य)

वेदानामादिकवये शक्तिवैचित्र्यशालिने ।
चराचरजगच्चित्रचित्रकाराय ते नमः ।। ५४ ।।

**ब्रह्मा** :- (आत्मगतम्) हन्त ! भुमिका[1]नुरुपलटहत्वं कैटभाहितस्य । (प्रकाशम्) देव ! विजयस्व ।

**जाम्बवान्**:- वत्से ! प्रणम भगवन्तम् । (इति तया सह प्रणमति)

**देव** :-

वारिजासनवक्त्राब्जवनलीलामरालिके ।
समस्तकविजीवातो सरस्वति नमोऽस्तु ते ।। ५५ ।।

(सर्वे प्रणमन्ति)

**नारद**:- भगवन् ! किं कुर्वाणगण्यो नारदोऽभिवादयते ।



1. नुरुपलअहत्वं-A.

**ब्रह्मा** :- (सस्मितम्) इत एहि ।

**नारदः**- (उपसर्पति)

**ब्रह्मा** :- (जनान्तिकम्) वत्स ! किं विलम्बेन ? यदयमेव (विवाह) मुहूर्तः ।

**नारदः**- अथ किम् ।

**ब्रह्मा** :- (प्रकाशम्) देव ! देवकीनन्दन !

**देव** :- आज्ञापय ।

**ब्रह्मा** :-

भूमावुपैपि जगतां परिपालनाय
सन्दृश्यतामुपनिषत्कृतिनायकस्त्वम् ।

(नायिकां दर्शयित्वा)

सम्पत्तिसौरभसमञ्चितलोचनान्ता
सेयं रमा कलशसागरभागधेयम् ॥ ५६ ॥

तदियं पौत्री मम प्रतिगृह्यताम् । (इति जाम्बवत्या हस्तं देवहस्ते ददाति)

**जाम्बवान्**:- (सहर्षम्) अहो ! मयि करुणा भगवतः कमलागनस्य । यदयमनुरुणद्धि संसारम् ।

**देव** :- (सप्रश्रयं प्रतिगृह्णन्) कथमन्यथा भगवतस्सङ्कल्पोऽपि ! किमुत वाचा समाज्ञापनम् ।

**सरस्वती**:-

वत्सो मा लज्जसु समंलिअ महाभाअं ।
लज्जउकम्परुक्ख सविहट्ठिआकणअलआ ।। ५७ ।।

**जाम्ब**:- असंसअं दाणिं कअत्थजं मणम्मि ।

**देव** :- (सरोमांचमात्मगतम्)

स्वेदमरन्दरसार्द्रा पारिप्लवनयनमधुकरोल्लासा ।
पुलकमुकुला त्रपानिलतरलांगी कामकल्पवल्ली मे ।। ५८ ।।

**जाम्बवान्**:- (साष्टाङ्गं प्रणिपत्य) देव ! बहुधा कृतापराधः किञ्चिदिदानीमुच्छ्वसिमि ।

**देव** :- (सस्मितम्) भवदपराधः खल्वस्माकमीदृशायाभ्युदयाय ।

**ब्रह्मा** :- वत्स ! नारद ! निरूढो भवताऽयं लोकस्य महाभ्युदयः ।

**नारदः**- (सप्रश्रयम्) कोऽहम् ? अखिलमिदं [1]भगवतो निदेशसामर्थ्यम् ।

**देव** :- नारद ! [2]किमिदमन्यादृशं संविधानम् ?

**नारदः**- एवम् । (इति सर्वं कथयति)

**देव** :- हन्त ! निरतिशयः खलु अस्मासु पक्षपातो भगवतः ।



1. नास्ति-B.C. 2. नास्ति-B.C.

विदू :- हीही चन्दलेहे ! [illegible] कुमुइणि ! फलिदा अह्माणं मणरहा ।

सख्यौ :- अह इं ।

विदू :- (नृत्यति)

(सर्वे हर्षं नाटयन्ति)

ब्रह्मा[1] :- देव ! वधूसहायश्चिरमानन्दय [2]यदुलोकम् ।

देव :- यदाज्ञापयति ।

ब्रह्मा :- देव ! किं ते भूयः प्रियमुपहरामि ?

देव :- [3]किमितः परमपि प्रियमस्ति ?

भुविजनपरिवादो वारितो रत्नलाभा-
द्वरकुलगुणरूपा वल्लभाऽभूदियञ्च ।
किमिह वहुभिरुक्तैस्त्वञ्च दृष्टोऽसि साक्षा
दकृतकवचनानामादिमस्सम्प्रदायः ।। ५९ ।।

तथाऽप्येवमस्तु भरतवाक्यम्-

लक्ष्मीः स्थैर्यं भजतु विदुषां मन्दिरेषु प्रकामं
सन्तः काव्यं परिणतरसं सन्ततं भावयन्तु ।

---



1. पंक्तिरियं नास्ति-C. 2. [illegible]-B. 3. [illegible]-A.B.C.

कोदण्डाङ्कं किमपि करुणापूरपूर्णायताक्षं
श्यामं धाम श्रयतु सततं चेतना मामकीना ॥ ६० ॥

(एवमस्त्विति निष्क्रान्तास्सर्वे)

## -- पञ्चमोऽङ्कः --

[1]समाप्तमिदं नाटकम्

धर्मः पादचतुष्टयेन कृतवत्स्थैर्यं समालम्बतां
चातुर्वर्ण्यमुपैतु कर्म सततं स्वस्वाधिकारोचितम् ।
शेषक्ष्माधरनायकस्य कृपया सप्तार्णवीमध्यगां
रक्षन् गामिह कृष्णरायनृपतिर्जीयात्सहस्रं समाः ॥

**समाप्तमिदं**

**राजाधिराज राजपरमेश्वर सकलकलाभोज राजविभव-मूरुरायगण्ड श्रीमत्कृष्णरायमहारायविरचितं जाम्बवती-[2]परिणयं नाम नाटकम् ॥**



1. समाप्तंचेदं-A. 2. कल्याणं-A.C.

# ERRATA

## शोधनपत्रम्

| Page | Line | Read | For |
|---|---|---|---|
| २ | १९ | पारावारस्य | परावारस्य |
| १४ | १८ | (साश्चर्यम्) | (साश्यर्यम्) |
| १६ | १२ | गार्हस्थ्य | गास्थ्य |
| १७ | ११ | दिविषन्मृगाक्षी | दिवषन्मृगाक्षी |
| २७ | १ | कुमु | कुभु |
| २७ | १२ | यदियम् | यदियय् |
| ३१ | ११ | पाटित | पटित |
| ३५ | १० | (सश्लाघम्) | (कश्लाघम्) |
| ३५ | १२ | (कम्य) | (सम्य) |
| ४० | ४ | वासराणि | वासाराणि |
| ४० | १५ | पद्मांमहीम् | पद्मां महीम् |
| ४१ | ६ | कुचतटीं | कुचुतटीं |
| ६१ | १७ | पुलककलिका | पुलककलका |
| ६६ | ७ | बाष्पाम्भोभिः | बाष्पाम्मोभिः |
| ७४ | ७ | मदनः | मदतः |
| ७६ | १८ | प्रतीक्षते | प्रतिक्षते |
| ८२ | १७ | प्रणुदन्नभून्मे | प्रणुन्नभून्मे |
| ८४ | ८ | वियदम्बुधि | वियदम्वुधि |
| ९३ | १३ | अइसरिअं | अइसइअं |
| १०३ | ८ | [illegible] | [illegible] |

| | | | |
|---|---|---|---|
| १०७ | ५ | आज्ञप्तोऽस्मि | आज्ञप्रोऽस्मि |
| १०८ | १७ | स्यमन्तकं | स्यमत्तकं |
| १०९ | १७ | जाम्बवता | जाम्बता |
| ११२ | २ | आनन्दावाप्त्यै | आनन्दावात्प्यै |
| ११८ | १ | मूर्ता | मुर्ता |
| १२१ | ११ | (स्वगतम्) | (स्वागतम्) |
| १२२ | ६ | कुल्प्ता | क्लप्ता |
| १२४ | १६ | चाणूर | चाणुर |
| १२८ | ३ | चिह्नितास्या | चिह्नितास्हा |
| १३१ | ५ | गृहाण | गृहण |
| १३४ | १० | भूमिका | भुमिका |
| १३५ | १० | कमलासनस्य | कमलागनस्य |

